

॥ श्रीमदभिनवचन्द्रेश्वरो विजयतेतराम् ॥

शुक्लयजुर्वेदीयकाण्वशाखान्तर्गतशतपथब्राह्मणान्तर्भूता

# बृहदारण्यकोपनिषत्

## भाग १ - मधुकाण्डम्

### मिताक्षराहिन्दीव्याख्यासंवलितशाङ्करभाष्ययुता

(पारायण संस्करण)






'विद्यानन्दीमिताक्षरा' व्याख्याकार एवं निर्देशक

वेदान्त-सर्वदर्शनाचार्य यतीन्द्रकुलतिलक श्रीकैलासपीठाधीश्वर परमादर्श

आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी महाराज

ॐ

# कैलास आश्रम ऋषिकेश में संस्थापित



श्रीमदभिनवचन्द्रेश्वर महादेव



भगवान् आदि शङ्कराचार्य भगवत्पाद

शाङ्करी परम्परा के उपासक श्री कैलास आश्रम ऋषिकेश की संस्थापना सन् १८८० में स्वनामधन्य श्री मत्परमहंस परिव्राजकाचार्य श्रोत्रिय ब्रह्मनिष्ठ आचार्य महामण्डलेश्वर अनन्त श्री स्वामी धनराज गिरि जी महाराज (आद्य महाराज श्री) ने की थी। स्वप्न में मिले भगवदादेश के अनुसार आद्य महाराज श्री ने कनखल हरिद्वार से महादेव के सुन्दर बाण को कैलास आश्रम में माघ शु. ७ वि. सं. १९५३ (सन् १८९७) में प्रतिष्ठित किया। इनको अभिनवचन्द्रेश्वर महादेव की संज्ञा आद्यमहाराजश्री ने दी और इनके ही सन्मुख बैठकर एवं इन्हीं को मुख्य श्रोता मानकर नित्य वेदान्त स्वाध्याय प्रवचन करने लगे। जो नियम आज तक वैसे ही परवर्ती आचार्य निभाते आ रहे हैं। भगवान् अभिनवचन्द्रेश्वर की प्रतिष्ठा के सात वर्ष बाद श्री आद्य शङ्कराचार्य भगवत्पाद की संस्थापना उनके चार शिष्यों सहित कैलास आश्रम में माघ शु. त्रयोदशी वि. सं. १९६० (सन् १९०४) में हुई। इस दिन प्रतिवर्ष कैलास आश्रम वार्षिकोत्सव के अन्तर्गत कैलास मेला लगता है।

कैलास आश्रम में प्रतिदिन प्रातःकाल की आरती पुष्पांजलि मुख्यरूप से आचार्य शंकर भगवत्पाद को समर्पित की जाती है। अतएव प्रातःकाल श्री कैलासपीठाधीश्वर एवं सन्तगण श्रीआदिशङ्कराचार्य के सन्मुख खड़े होकर आरती करते हैं। सायंकाल की आरती नीराजनादि श्री अभिनवचन्द्रेश्वर महादेव को मुख्य मान कर होती है।

श्री अभिनवचन्द्रेश्वर महादेव की प्रतिष्ठा शताब्दी सन् १९९७ में बड़ी धूम-धाम से मनाई गई। सन् २००४ में आद्यशङ्कराचार्य जी महाराज की प्रतिष्ठा शताब्दी **गुरुजन शताब्दी त्रिवेणी संगम** के अन्तर्गत परम उल्लासपूर्वक मनाने की योजना बन रही है। इस प्रसंग पर समस्त शांकर साहित्य का सात दिनों का अखण्ड पारायण कराने का संकल्प श्री दशम कैलासपीठाधीश्वर जी महाराज का है।



।।श्री अभिनवचन्द्रेश्वरो विजयतेतराम् ।।

श्रीकैलासविद्यालोकस्य अष्टषष्ठितमः (६८) सोपानः

शुक्लयजुर्वेदीयकाण्वशाखान्तर्गतशतपथब्राह्मणान्तर्भूता

# बृहदारण्यकोपनिषत्

## (भाग १ - मधुकाण्डम्)

**मिताक्षराहिन्दीव्याख्यासंवलितशाङ्करभाष्ययुता**

## (पारायण संस्करण)



'विद्यानन्दीमिताक्षरा' व्याख्याकार एवं निर्देशक

वेदान्त-सर्वदर्शनाचार्य यतीन्द्रकुलतिलक श्रीकैलासपीठाधीश्वर परमादर्श

**आचार्य महामण्डलेश्वर श्रीमत्स्वामी विद्यानन्द गिरि जी महाराज**




विद्वत्सम्पादकमण्डलेन सम्पादितम्

ॐ

प्रकाशक :- दूरभाष :

श्री कैलास विद्या प्रकाशन, ०१३५–४३०५९८

कैलास गेट, हृषीकेश (उ० प्र०)

प्रसंग : गुरुजन शताब्दी त्रिवेणी सङ्गम।

सौजन्य : भक्त श्रीदेसराज जी चानना एवं माता श्री वीराँवाली चानना के सुपुत्र श्रीमान् नरेन्द्र चानना, पुत्रवधू श्रीमती नीरजा चानना, पौत्र चि० मनीष एवं आशीष चानना, पश्चिम विहार, नयी दिल्ली।



बृहदारण्यकोपनिषत् भाग-१ मधुकाण्डम्

प्रथमावृत्ति ३000 वि० सम्वत् २०५७ सन् २०००

मूल्यं : २०० रूप्यकाणि

ग्रन्थप्राप्तिस्थानानि —

१. श्री कैलास आश्रम, कैलास गेट, मुनि की रेती, ऋषिकेश-२४९२०१
२. श्री दशनाम संन्यास आश्रम, भूपतवाला, हरिद्वार-२४९४०१
३. श्री कैलास आश्रम, उज्जेली, उत्तरकाशी-२४९१९३
४. श्री शंकर ब्रह्मविद्याकुटीर, ८३ - ए, द्वारका पुरी, मुजफ्फर नगर-२५१००१
५. श्री कैलास विद्यातीर्थ, (आदि शंकराचार्य स्मारक) ६, भाई वीर सिंह मार्ग, नई दिल्ली-११०००१
६. श्री कैलास विद्यातीर्थ, गिरियक रोड, राजगीर (नालन्दा)-८०३११६
७. श्री कैलास आश्रम, मॉडल टाऊन, रोहतक - १२४००१
८. श्री राम आश्रम, समानामण्डी, पटियाला-१४७१०१
९. श्री कैलास विद्याधाम, रूप नगर, जम्मू तवी
१०. नर्मदा सत्संग आश्रम, सिक्नीमालवा, होशंगाबाद

मुद्रक :— नाथ प्रिंटर्ज, जोशी रोड, करोल बाग, नई दिल्ली - ११०००५, दूरभाष - ३५५५५८९, ३६१९१७०

*लेज़र कम्पोज़िंग* : - आकृति प्रिन्टोग्राफिक्स, जनक पुरी, नई दिल्ली - ११००५२ ✦ दूरभाष : ५५२३००६

ॐ

# सम्पादकीय

## दिशन्तु शं मे गुरुपादपासंव :

'सा विद्या या विमुक्तये' के अनुसार मोक्षप्रद ब्रह्मविद्या ही एकमात्र विद्या कोटि में गिणनी चाहिए। अन्य सभी विद्यायें तो पेटभरी विद्यायें हैं। इनसे जीव को शाश्वत सुख शान्ति की प्राप्ति असम्भव है। 'अध्यात्मविद्या विद्यानाम्' से भगवान् ने श्रीमद्भगवद्गीता में ब्रह्मविद्या को अपनी दिव्य विभूतियों में घोषित किया है। ब्रह्मविद्या का मुख्य स्रोत वेद एवं तदनुकूल शास्त्र हैं। वेद के ज्ञानकाण्ड को उपनिषद कहते हैं उसी में ब्रह्म के स्वरूप, उसके ज्ञान के साधनों और ब्रह्मज्ञान से होने वाले मोक्ष रूपी फल का विस्तृत वर्णन मिलता है। प्राचीन काल में यह विद्या गुरु शिष्य परम्परा से जिज्ञासुओं को प्राप्त होती थी। ऋषियों के आश्रमों में ब्रह्मचर्य के पालन पूर्वक वेदाध्ययन द्वारा विद्यार्थी इस विद्या को प्राप्त करते थे। बाद में विशेषकर कलियुग के आरम्भ होने पर कुछ लोगों ने वेद के तात्पर्य (जीव, ब्रह्म एकता) को न समझकर केवल कर्मकाण्ड में अपने आपको फंसा लिया। इससे भी नीचे उतरकर कुछ लोगों ने पशु हिंसादिपूर्वक यज्ञ कर मांस भक्षण आदि दुर्व्यसनों का सेवन प्रारम्भ कर दिया और इसी को धर्म मानकर अपनी अधोगति को ही न्यौता दिया। उस काल के हिंसा रूपी अधर्म को समाप्त करने के लिये भगवान् बुद्ध ने अवतार लिया और अहिंसा की पुनः प्रतिष्ठा की। इसके लिये उन्हें वेदों के विरुद्ध भी प्रचार करना पड़ा। बुद्ध काल से १२०० वर्ष बाद वैदिक धर्म की पुनः स्थापना के लिये भगवान् शङ्कर ने भगवान् शङ्कराचार्य के रूप में अवतार लिया। उन्होंने स्वल्प समय में ही अपनी ज्ञानशक्ति के बल पर अवैदिकों को भारत भूमि से खदेड़ डाला और वेदोक्त ब्रह्मविद्या के सिद्धान्तों को उपनिषदों, भगवद्गीता और ब्रह्मसूत्रों पर अपने भाष्यों में स्पष्ट किया। भारत की चारों दिशाओं में उन्होंने चार मठों की स्थापना की। इससे भारत की अखण्डता एवं सांस्कृतिक एकता के रक्षणार्थ एक स्वस्थ परम्परा की प्रतिष्ठा हुई।

धर्म के सभी आचरणों में भगवान् श्रीआद्यशङ्कराचार्यजी ने जो आदर्श स्थापित किये उन्हीं से शाङ्करी परम्परा का जन्म हुआ। इस परम्परा का अनुसरण कर दशनाम संन्यासी समाज और वैदिक धर्मानुयायी, अपने में गौरव का अनुभव करते थे। काल के प्रभाव से यह परम्परा कुछ क्षीण होती गई। यहाँ तक कि भगवान् शङ्कराचार्यजी द्वारा संस्थापित चार मठों में भी एक शृंगेरी को छोड़कर कुछ शिथिलता आई। इनमें उत्तराम्नाय की स्थिति सबसे चिंताजनक इस लिये हो गई क्योंकि यहाँ आचार्य पीठ काफी समय रिक्त रही। भगवत्कृपा से श्री कैलास आश्रम ऋषिकेश के आचार्यों ने शांकरी परम्परा को सर्वतोभावेन अपनाया। प्रस्थान त्रयी ग्रन्थों का कैलासाश्रम के स्वाध्याय क्रम में भगवान् शंकराचार्यों के भाष्य, टीका एवं स्वरचित टिप्पणियों के सहित ही पाठ चलता है।

श्री कैलास आश्रम ऋषिकेश के संस्थापक स्वनाम धन्य श्रोत्रिय ब्रह्मनिष्ठ आचार्य महामण्डलेश्वर अनन्त श्री स्वामी धनराज गिरि जी महाराज अपने आप में एक चल ब्रह्मविद्यापीठ ही थे। सन् १८८० में कैलास आश्रम के प्रथम कक्ष की संस्थापना के साथ इस ब्रह्मविद्यापीठ का अचल स्वरूप

सामने आया और स्वामी जी महाराज ने प्रथम कैलासपीठाधीश्वर आचार्य महामण्डलेश्वर की ख्याति प्राप्त की। आपकी छत्रछाया में हजारों जिज्ञासुओं ने ब्रह्मविद्या का पाठ पढ़ा। उनमें विश्वविख्यात स्वामी विवेकानन्द जी, उनके गुरु भ्राता स्वामी अभेदानन्द जी, स्वामी रामतीर्थ जी (राम बादशाह) आदि विभूतियाँ परम उल्लेखनीय हैं।

संस्थापक आचार्यपाद के बाद कैलास ब्रह्मविद्यापीठ पर क्रमशः नौ आचार्य विराजमान हुये। ये सभी श्रोत्रिय ब्रह्मनिष्ठ और शांकरी परम्परा में पूर्ण निष्ठा रखने वाले हुये। वर्तमान दशम पीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर श्रोत्रिय, ब्रह्मनिष्ठ श्री १००८ स्वामी विद्यानन्द गिरि जी महाराज ने शाङ्करी परम्परा का न केवल निष्ठापूर्वक अनुसरण किया बल्कि उसको सब प्रकार से पुष्ट करने का स्तुत्य सफल प्रयास भी किया। जिसे देखकर संतों और भक्तों ने उनको **शांकरीपरम्परासंपोषकाचार्य** उपाधि से समलंकृत किया। आपके पीठासीन हुये तीस वर्षों के कार्यकाल में कैलास आश्रम से अनेकों ग्रन्थों का प्रकाशन हुआ है, जिन्हें विद्वद् समाज ने बड़े आदरपूर्वक सराहा है। महाराज श्री ने शाङ्कर भाष्य के हिन्दी अनुवाद सहित प्रस्थानत्रयी के ग्रन्थों का प्रकाशन करवाकर न केवल राष्ट्रभाषा को समृद्ध किया है अपितु शांकर भाष्य को जनमानस में उतारने के लिये अत्यावश्यक कार्य को संपन्न किया है। भारत या अन्यत्र किसी भी एक प्रकाशक ने इतनी सामग्री के साथ आज तक प्रस्थानत्रयी का प्रकाशन नहीं किया। ऐसे अपूर्व कार्य का सम्पादन कैलासपीठ के दशमाचार्य महाराजश्री ने करके कैलास आश्रम को चिरस्थाई गौरव प्रदान किया है।

श्री कैलास आश्रम ऋषिकेश से प्रकाशित ग्रन्थावली क्रम में उपनिषदों के पारायण संस्करण प्रकाशन का कार्य आजकल चल रहा है। इसमें अभी तक **ईशादिपञ्चोपनिषदः** एवं **माण्डूक्यादित्रयोपनिषदः** का प्रकाशन तथा लोकापर्ण हो चुका है। प्रस्तुत बृहदारण्यक उपनिषद् के पारायण संस्करण को तीन भागों में प्रकाशित किया जा रहा है। ये हैं **( १ ) मधुकाण्ड ( २ ) मुनिकाण्ड और ( ३ ) खिलकाण्ड**। संभवतः इस प्रकार काण्ड-विभाग पूर्वक प्रकाशन अभी तक नहीं हुआ था।

पारायण उपयोगी इस ग्रन्थ में मूलमन्त्र, उस की मिताक्षरा हिन्दी व्याख्या एवं जगद्गुरु आदि शङ्कराचार्य द्वारा विरचित प्रासादिक शाङ्करभाष्य का समावेश किया गया है। यद्यपि पारायण तो मूलमन्त्र सहित शाङ्करभाष्य का ही आचार्यगण करते हैं। पर संस्कृत भाषा पर समुचित अधिकार न रखने वाले जिज्ञासुओं को मन्त्रार्थावबोध के लिये मिताक्षरा हिन्दी व्याख्या अत्यन्त उपयोगी होने से उसे देना आवश्यक समझ कर समाविष्ट किया गया है।

नियमतः शाङ्करभाष्य पारायण के कल्पक भी श्री कैलास आश्रम के वर्तमान दशम पीठाधीश्वर जी महाराज ही हैं, जो १ जुलाई १९९८ से प्रतिदिन एक घण्टा शाङ्करभाष्य के पारायण का नियम दृढ़तापूर्वक निभा रहे हैं और आजीवन इस व्रत को निभाने का संकल्प ले चुके हैं। उनका प्रयास है कि न केवल प्रत्येक कैलास आश्रम की शाखाओं में इस प्रकार का दैनिक स्वाध्याय हो, अपितु शाङ्करी परम्परा की सभी संस्थाओं में शाङ्कर साहित्य का दैनिक पारायण हो। सनातन धर्म के जिस संस्थान में वेदपाठ एवं शाङ्कर भाष्य की पावन ध्वनि प्रतिदिन न सुनाई दे, उन संस्थानों के बनाने में जो श्रम हुआ वह सार्थक कदापि नहीं माना जायगा, ऐसा महाराज श्री मानते हैं। इस संदर्भ में

वे गुरुद्वारों की भूरिशः प्रशंसा करते हैं, जहाँ प्रतिदिन सायं प्रातः गुरुवाणी का पाठ बड़ी श्रद्धा एवं लगन से किया जाता है। भगवान् आदि शंकराचार्य जो जगद्गुरु कहलाते हैं और धर्मोद्धारक एवं युगपुरुष की संज्ञा से समलङ्कृत हैं, उनकी कृतियों का पारायण कर हम अपने जीवन में ज्ञान ज्योति को प्रज्वलित करने के साथ-साथ उन गुरुजनों के असंख्य उपकारों के प्रति अपनी कृतज्ञता भी व्यक्त कर सकेंगे। उपरोक्त ग्रन्थों के पारायण संस्करण पारायणानुरक्त साधकों के सौविध्य के लिये ही महाराज श्री प्रकाशित करवा रहे हैं। इन प्रकाशनों में हिन्दीमिताक्षरा के रचयिता महाराज श्री स्वयं ही हैं तथा आद्योपान्त उन्हीं के निर्देशानुसार सभी कार्य हो रहे हैं। एतदर्थ उनके पावन चरणारविन्दों में जितनी कृतज्ञता व्यक्त की जाये, वह थोड़ी ही है।

बृहदारण्यकोपनिषद् पारायण संस्करण के मूलमन्त्र में आये हुये पदों को शांकर भाष्य में मोटे टाईप द्वारा उद्धृत किया गया है। इस प्रकार 'प्रतीक' पदों को उजागर (हाईलाईट) करने का सुझाव कैलास आश्रम के आचार्य श्री धर्मानन्द जी महाराज ने दिया। और भाष्य ग्रन्थ में ब्र. सिद्धार्थ ने 'प्रतीकों' को "हाईलाईट" किया। एतदर्थ हम उन दोनों के बहुत आभारी हैं।

ग्रन्थ बृहत्काय होने से इसके संपादन एवं प्रूफ संशोधन में हमें स्वामी निश्चलानन्द गिरि जी महाराज का अमूल्य सहयोग प्राप्त हुआ। साथ ही स्वामी अभयारण्यजी, ब्र० उत्तमानन्द जी एवं ब्रह्मचारी सिद्धार्थ जी ने भी सराहनीय योगदान किया। हम इन सभी महानुभावों के हृदय से आभारी हैं।

ग्रन्थ प्रकाशन में भक्त श्रीदेशराज जी चानना एवं माता वीराँ वाली चानना दिल्ली के सुपुत्र श्री नरेन्द्र चानना, पुत्रवधु नीरजा चानना, पौत्र चि० मनीष एवं चि० आशीष चानना ने स्वेच्छा से अपनी आर्थिक सेवाएँ समर्पित कीं। उनकी इस निष्काम सेवा में महाराजश्री एवं पूर्वाचार्यों के प्रति उनकी अटूट निष्ठा झलकती है। उनकी जैसी ही भक्ति एवं निष्ठा उनके परिवार में आगे भी बनी रहे, ऐसी भगवान् आशुतोष के चरण कमलों में प्रार्थना है।

इस ग्रन्थ के कम्पोजिंग को कम्प्यूटर द्वारा श्री अरुण कटारिया ने संपन्न किया है और मुद्रण श्रीमान् प्रवेश शर्मा, गिरीश शर्मा जी ने अपनी प्रैस नाथ प्रिंटर्ज में करवाया है। ये सभी महानुभाव महाराज श्री और कैलास आश्रम के भक्त हैं। इन्हें भूरिशः धन्यवाद है।

कैलास आश्रम तथा शाख्याश्रमो में सन् २००४ में <u>गुरुजन शताब्दी त्रिवेणी संगम महोत्सव</u> होने वाला है जिस की तैयारी अभी से प्रारम्भ हो गयी है। इस त्रिवेणी में प्रथम स्थानीय, कैलास आश्रम ऋषिकेश में भगवान् आदि शंकराचार्य के सुन्दर विग्रह की संस्थाना को १०० वर्ष पूर्ण होंगे। दूसरे, कैलास के अष्टम पीठाचार्य परमपूज्य शास्त्री जी महाराज के जन्म के १०० वर्ष पूर्ण होंगे और तीसरे महाराजश्री के गुरुदेव परमहंस परमपूज्य स्वामी विज्ञानानन्द गिरि जी महाराज की भी जन्म शताब्दी उसी समय होगी। इस पावन प्रसंग के उपलक्ष्य में इस ग्रंथ का प्रकाशन उन गुरुजनों के पवित्र पादपद्मों में अत्यन्त शोभनीय श्रद्धाञ्जलि होगी, ऐसा हमारा विश्वास है।

महाशिवरात्रि
वि. सं. २०५६

गुरुपादानुरागी
**स्वर्ण लाल तुली**

बृ.उ. ~~सर्वाम्नाय परिशोधिनी~~. / वेदान्तो नाम उपनिषद् प्रमाणम्.
{साधु विष खाय कर जाय. साधु न बान्धे डेरा.
कहे गिरधर कविराय कहा एक बात मानो हमारा॥

# बृहदारण्यकोपनिषत् – मधुकाण्डम्

आयुर्विद्या कर्म वित्तं च निधनम् गर्भस्थस्य देहिनः निश्चितम्

## आह्निक-प्रदीपिका

एकनाथ गंगोत्रीसे जल लाकर पण्डपम् में गधा को पिलाया
रामेश्वर भगवान वहीं प्रकट होगये॥

उपक्रम उपसंहार: आत्मेत्येवोपासीत 1-4-7 आत्मानमेव लोकं उपासीत 1-4-15.
अभ्यास: तदेतद् पदनीयं अस्य सर्वस्य यदयं आत्मा 1-4-7; 1-4-8. अहं ब्रह्मास्मि 1-4-10
अपूर्वता: तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते 1-4-9

ॐ तत्सद्ब्रह्मणे नमः।

# बृहदारण्यकोपनिषत्

शुक्लयजुर्वेदीय काण्वशाखा. शतपथ ब्राह्मण

फल: य एवं वेद अहं ब्रह्मास्मि इति स इदं सर्वं भवति 1-4-10.
अर्थवाद: तस्य ह न देवाश्च नाभूत्या ईशते 1-4-10.
उपपत्ति स एष इह प्रविष्टः आनखाग्रेभ्यः 1-4-7.

अथ मधुकाण्डम्

## अथ प्रथमोऽध्यायः

*** मधुकाण्डे

### अश्वमेधनामप्रथमं ब्राह्मणम्।

मिताक्षराहिन्दीव्याख्यासंवलिततशाङ्करभाष्यसमेता।

*****

।अथ श्रीमच्छङ्करभगवत्पादविरचितं भाष्यम्।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः।

"उषा वा अश्वस्य" इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत्। तस्या इयमल्पग्रन्था वृत्तिरारभ्यते संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये।

सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या, तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्। उपनिपूर्वस्य सदेस्तदर्थत्वात्। तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते।

सेयं षडध्याय्यरण्येऽनूच्यमानत्वादारण्यकम्। बृहत्त्वात्परिमाणतो बृहदारण्यकम्। तस्यास्य कर्मकाण्डेन संबन्धोऽभिधीयते।

सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात्।

दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नाऽऽगमान्वेषणा। न चासति जन्मान्तरसंबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्। स्वभाववादिदर्शनात्।

तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्यास्तीत्येवोपलब्धव्य इत्येवमादिनिर्णयदर्शनात् "यथा च मरणं प्राप्य" इत्युपक्रम्य —

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

अंग वंग कलिंगेषु मगध सौराष्ट्रे च।
विनायात्रां यदि गच्छेत पुनःसंस्कारमर्हति॥

अनधिगत अबाधित अर्थबोधकत्वं प्रमाणम्



"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥" कठ 5-7.

इति च "स्वयं ज्योतिः" इत्युपक्रम्य "तं विद्याकर्मणी समन्वारभेते" "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति च "ज्ञपयिष्यामि" इत्युपक्रम्य "विज्ञानमयः" इति च व्यतिरिक्तात्मास्तित्वम्।

तत्प्रत्यक्षविषयमेवेति चेत्। न, वादिविप्रतिपत्तिदर्शनात्। न हि देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः। न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते, नास्ति घट इति।

स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्। न, निरूपितेऽभावात्। न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति। वैनाशिकास्त्वहमितिप्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते।

तस्मात्प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षान्नाऽऽत्मास्तित्वसिद्धिः। तथाऽनुमानादपि। श्रुत्याऽऽत्मास्तित्वे लिङ्गस्य दर्शितत्वाल्लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत्। न। जन्मान्तरसंबन्धस्याग्रहणात्। आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्ग-विशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययं लिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चाऽऽत्मेति।

सर्वथाऽप्यस्त्यात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरि-हारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम्। न त्वात्मन इष्टानिष्टप्राप्ति-परिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्म-स्वरूपविज्ञानेनापनीतम्। यावद्धि तन्नापनीयते तावदयं कर्मफलरागद्वेषादिस्वाभाविक-दोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्ट-साधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन, स्वाभाविकदोषबलीयस्त्वात्। ततः स्थावरान्ताधोगतिः।

कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम्। ततो मनआदिभिरिष्टसाधनं बाहुल्येनो-

पचिनोति धर्माख्यम्। तद्द्विविधम्-ज्ञानपूर्वकं केवलं च। तत्र केवलं पितृलोकादि-प्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। तथाच शास्त्रम् ''आत्मयाजी श्रेयान्देवयाजिनः'' इत्यादि। स्मृतिश्च ''द्विविधं कर्म वैदिकम्'' इत्याद्या। साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः। एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादि-दोषवतो धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया।

तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत्। स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते।

अस्य त्वश्वमेधकर्मसंबन्धिनो विज्ञानस्य प्रयोजनं, येषामश्वमेधे नाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः। ''विद्यया वा कर्मणा वा'' ''तद्धैतल्लोकजिदेव'' इत्येवमादिश्रुतिभ्यः।

कर्मविषयत्वमेव विज्ञानस्येति चेत्। न। ''योऽश्वमेधेन यजते य उ चैनमेवं वेद'' इति विकल्पश्रुतेः। विद्याप्रकरणे चाऽऽम्नानात्। कर्मान्तरे च संपादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते। सर्वेषां च कर्मणां परं कर्माश्वमेधः। समष्टि-व्यष्टिप्राप्तिफलत्वात्।

तस्य चेह ब्रह्मविद्याप्रारम्भे आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम्। तथाच दर्शयिष्यति फलमशनायामृत्युभावम्।

न नित्यानां संसारविषयफलत्वमिति चेत्। न। सर्वकर्मफलोपसंहारश्रुतेः। सर्वं हि पत्नीसंबद्धं कर्म। ''जाया मे स्यादेतावान्वै कामः'' इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां च ''अयं लोकः पितृलोको देवलोकः'' इति फलं दर्शयित्वा त्र्यन्नात्मकतां चान्त उपसंहरिष्यति ''त्रयं वा इदं नाम रूपं कर्म'' इति। सर्वकर्मणां फलं व्याकृतं संसार एवेति।

इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत्। तदेव पुनः सर्वप्राणिकर्मवशाद्व्या-

ॐ। उषा वा अश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य। द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि, मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि, नभो माꣳसानि। ऊवध्यꣳ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च

ॐ यज्ञ सम्बन्धी अश्व का शिरोभाग ब्रह्ममुहूर्त है (नेत्रों का अभिमानी देव) सूर्य उनका नेत्र है, वायु प्राण है, वैश्वानर अग्नि उसका खुला हुआ मुख है (क्योंकि मुख का अधिष्ठातृदेव अग्नि ही है) और यज्ञीय अश्व का आत्मा संवत्सर है, (अश्वस्य मेधस्य, इसकी पुनरुक्ति सबके साथ सम्बन्ध बतलाने के लिये है) ऊँचाई में समानता होने के कारण द्युलोक उसका पृष्ठ है। छिद्ररूपता में समानता होने के कारण अन्तरिक्ष उदर है, पृथिवी पैर रखने का स्थान है, चारों दिशाएँ पार्श्व भाग हैं, आग्नेय आदि अवान्तर दिशाएँ पार्श्वभाग की अस्थियाँ हैं, संवत्सर के अवयव होने से ऋतुएँ अङ्ग हैं, मास और अर्धमास

---

क्रियते बीजादिव वृक्षः। सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयाऽऽत्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकोऽतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते। अतोऽस्मात्क्रियाकारकफलभेदस्वरूपादेतावदिदमितिसाध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्याऽऽरभ्यते।

तत्र तावदश्वमेधविज्ञानाय "उषा वा अश्वस्य" इत्यादि। तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्यादश्वस्य। प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च।

**वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो, यद्विजृम्भते तद्विद्योतते, यद्विधूनुते तत्स्तनयति, यन्मेहति तद्वर्षति, वागेवास्य वाक् ॥१॥**

संधियाँ हैं, दिन और रात्रि पाद हैं, शुक्लत्व में समानता होने के कारण नक्षत्र अस्थियाँ हैं, आकाश में स्थित मेघ माँस है, सिकता उदरस्थ अर्धपक्व अन्न है, नदियाँ नाड़ियाँ हैं, पर्वत जिगर और हृदयगत माँसखण्ड है, औषधि और वनस्पतियाँ लोम तथा केश हैं, मध्याह्नकाल पर्यन्त ऊपर की ओर जाता हुआ सूर्य नाभि से ऊपर का भाग और मध्याह्नकाल से नीचे की ओर जाता हुआ सूर्य कमर से नीचे का भाग है, उसकी जमुहाई लेना बिजली चमकना है और जो शरीर का विधूनन है वह मेघ का गर्जन है, वह अश्व जो मूत्र त्याग करता है वही वर्षा है और वाणी ही उस अश्व की वाणी है॥१॥

---

**उषा** इति ब्राह्मो मुहूर्त उषाः। **वै**शब्दः स्मारणार्थः प्रसिद्धं कालं स्मारयति। **शिरः** प्राधान्यात्। शिरश्च प्रधानं शरीरावयवानाम्। **अश्वस्य मेध्यस्य** मेधार्हस्य यज्ञियस्योषाः शिर इति संबन्धः।

कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते। प्राजापत्यत्वं च प्रजापतिदृष्ट्यध्यारोपणात्। काललोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः। एवंरूपो हि प्रजापतिः। विष्णुत्वादिकरणमिव प्रतिमादौ।

**सूर्यश्चक्षुः** शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च। **वातः प्राणो** वायुस्वाभाव्यात्। **व्यात्तं** विवृतं मुखमग्निर्वैश्वानरः। वैश्वानर इत्यग्नेर्विशेषणम्। वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थो मुखस्याग्निदैवतत्वात्। **संवत्सर** आत्मा संवत्सरः द्वादशमासस्त्रयोदशमासो वा। **आत्मा** शरीरम्। कालावयवानां च संवत्सरः शरीरम्। शरीरं चाऽऽत्मा ''मध्यं ह्येषामङ्गानामात्मा'' इति श्रुतेः। **अश्वस्य** मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम्।

**द्यौः पृष्ठम्**। ऊर्ध्वत्वसामान्यात्। **अन्तरिक्षमुदरं** सुषिरत्वसामान्यात्। **पृथिवी पाजस्यं** पादस्यमिति वर्णव्यत्ययेन पादासनस्थानमित्यर्थः। **दिशश्चतस्रोऽपि**

## अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत, तस्य पूर्वे समुद्रे योनी, रात्रिरेनं पश्चान्महिमाऽन्वजायत, तस्यापरे

इस अश्व के सामने महिमा रूप से दिन प्रकट हुआ। उस ग्रह की योनि पूर्व समुद्र है, तत्पश्चात् महिमा रूप से रात्रि प्रकट हुई, उसकी योनि पश्चिम समुद्र है, ये

---

**पार्श्वे** पार्श्वेन दिशां संबन्धात्। पार्श्वयोर्दिशां च संख्यावैषम्यादयुक्तमिति चेत्? न। सर्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां संबन्धाददोषः। अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि।

**ऋतवोऽङ्गानि** संवत्सरावयवत्वादङ्गसाधर्म्यात्। **मासाश्चार्धमासाश्च पर्वाणि** संधयः संधिसामान्यात्। **अहोरात्राणि प्रतिष्ठाः**। बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठत्येतैरिति। अहोरात्रैर्हि कालात्मा प्रतितिष्ठत्यश्वश्च पादैः। **नक्षत्राण्यस्थीनि** शुक्लत्वसामान्यात्। **नभो** नभस्था मेघा अन्तरिक्षस्योदरत्वोक्तेर्**मांसान्युदकरुधिरसेचनसामान्यात्**।

**ऊवध्यमु**दरस्थमर्धजीर्णमशनं **सिकता,** विश्लिष्टावयवत्वसामान्यात्। **सिन्धवः** स्यन्दनसामान्यान्नद्यो **गुदा** नाड्यो बहुवचनाच्च। **यकृच्च क्लोमानश्च** हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ। क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव। **पर्वताः** काठिन्यादुच्छ्रितत्वाच्च। **ओषधयश्च** क्षुद्राः स्थावरा **वनस्पतयो** महान्तो लोमानि केशाश्च यथासंभवम्। **उद्यन्नुद्गच्छन्भवति** सविताऽऽमध्याह्नादश्वस्य **पूर्वार्धो** नाभेरूर्ध्वमित्यर्थः। **निम्लोचन्नस्तं** यन्नाऽऽमध्याह्नात्**जघनार्धोऽ**परार्धः पूर्वापरत्वसाधर्म्यात्। **यद्विजृम्भते** गात्राणि विनामयति विक्षिपति **तद्विद्योतते** विद्योतनं मुखघनयोर्विदारणसामान्यात्। **यद्विधूनुते** गात्राणि कम्पयति **तत्स्तनयति** गर्जनशब्दसामान्यात्। **यन्मेहति** मूत्रं करोत्यश्वस्**तद्वर्षति** वर्षणं तत्सेचनसामान्यात्। **वागेव** शब्द एवास्याश्वस्य **वागिति** नात्र कल्पनेत्यर्थः॥१॥

**अहर्वा** इति सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते, तद्विषयमिदं दर्शनम्। अहः सौवर्णो ग्रहो दीप्तिसामान्याद्वै। **अहरश्वं पुरस्ता-**

**समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः। हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः, समुद्रो योनिः॥२॥**

**इति प्रथमाध्यायस्य प्रथमं ब्राह्मणं समाप्तम्॥१॥**

दोनों ही इस अश्व के पीछे दोनों ओर महिमा संज्ञक ग्रह हुए, (जो कि इस अश्व के आगे पीछे स्वर्ण और रजत के पात्र विशेष रखे जाते हैं) इसने हय होकर देवताओं को वहन किया, वाजी होकर गन्धर्वों को, अर्वा होकर असुरों को और अश्व होकर मनुष्यों को वहन किया। समुद्र (परमात्मा ही) इसका बन्धन है और परमात्मा ही उसकी उत्पत्ति का कारण है॥२॥

---

**न्महिमाऽन्वजायतेति** कथम्? अश्वस्य प्रजापतित्वात्। प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते। अश्वं लक्षयित्वाऽजायत सौवर्णो महिमा ग्रहो, वृक्षमनु विद्योतते विद्युदिति यद्वत्। **तस्य** ग्रहस्य **पूर्वे** पूर्वः **समुद्रे** समुद्रो **योनिर्**विभक्तिव्यत्ययेन। योनिरित्यासादनस्थानम्। तथा **रात्री** राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्याद्वा। एनमश्वं पश्चात्पृष्ठतो महिमाऽन्वजायत **तस्यापरे समुद्रे योनिः**। महिमा महत्त्वात्। अश्वस्य हि विभूतिरेषा यत्सौवर्णो राजतश्च ग्रहावुभवतः स्थाप्येते। ता**वेतौ वै महिमानौ** महिमाख्यौ ग्रहा**वश्वमभितः** पुरतः पृष्ठतः **संबभूवतुरुक्त**लक्षणावेव संभूतौ। इत्थमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थम्। तथा च **हयो भूत्वेत्यादि** स्तुत्यर्थमेव। हयो हिनोतेर्गतिकर्मणो विशिष्टगतिरित्यर्थः। जातिविशेषो वा। **देवानवहद्देवत्वमगमयत्प्रजापतित्वाद्देवानां वा** वोढाऽभवत्। ननु निन्दैव वाहनत्वम्। नैष दोषः। वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वादुच्छ्रायन्प्राप्तिर्देवादिसंबन्धोऽश्वस्येति स्तुतिरेवैषा। तथा वाज्यादयो जातिविशेषाः। **वाजी** भूत्वा **गन्धर्वानवहदि**त्यनुषङ्गः। तथा**ऽर्वा** भूत्वा**ऽसुरान्**। **अश्वो** भूत्वा **मनुष्यान्**। **समुद्र एवे**ति परमात्मा **बन्धुर्**बन्धनं बध्यतेऽस्मि-

।अथ प्रथमाध्यायस्याग्निनामद्वितीयं ब्राह्मणम्।

**नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत्। अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति। सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कथं ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद॥१॥**

(इस संसारमण्डल में मन आदि की उत्पत्ति से) पहले यहाँ नामरूप में विभक्त कुछ भी नहीं था, यह सब क्षुधारूप मृत्यु से आवृत था, क्योंकि क्षुधा ही मृत्यु है। उसने मन को इसलिये बनाया कि मैं मन से युक्त होऊँ। उसने अर्चन करते हुए आचरण किया। अतः उसके अर्चन करने से पूजा का अङ्गभूत रसात्मक जल उत्पन्न हुआ। पूजा करते हुए मुझे जल प्राप्त हुआ है। अतः यही अर्क का अर्कत्व है। जो इस प्रकार अर्क के इस अर्कत्व को जानता है, निश्चय ही उसे सुख प्राप्त होता है। (सुख की हेतुभूता पूजा करने से तथा जल का सम्बन्ध होने से अग्नि को ही गौण दृष्टि से अर्क कह दिया गया है, यही अश्वमेध याग में उपयोगी अग्नि के अर्कत्व में कारण बतलाया गया है)॥१॥

त्रिति। समुद्रो योनिः कारणमुत्पत्तिं प्रति। एवमसौ शुद्धयोनिः शुद्धस्थितिरिति स्तूयते "अप्सुयोनिर्वा अश्वः" इति श्रुतेः। प्रसिद्ध एव वा समुद्रो योनिः॥२॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम्॥१॥

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते। तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था। **नैवेह किंचनाग्र आसीत्**। इह संसारमण्डले किंचन किंचिदपि नामरूपप्रविभक्तविशेषं नैवाऽऽसीन्न बभूव। अग्रे प्रागुत्पत्तेर्मनआदेः। किं शून्यमेव बभूव? शून्यमेव स्यात् "नैवेह किंचन" इति श्रुतेः। न कार्यं कारणं वाऽऽसीदुत्पत्तेश्च। उत्पद्यते हि घटः। अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम्।

ननु कारणस्य न नास्तित्वं, मृत्पिण्डादिदर्शनात्। यन्नोपलभ्यते तस्यैव

सत् कार्यवाद : वेदान्ती; सांख्य | सत् कारण वाद = वेदान्ती.
असत् कार्यवाद : वैशेषिक; बौद्ध | असत् कारण वाद = बौद्ध; चार्वाक.



विमतं सत्पूर्वं कारणत्वात् घटमृत्तिकादिवत्

नास्तिताऽस्तु कार्यस्य, न तु कारणस्योपलभ्यमानत्वात्। न। प्रागुत्पत्तेः सर्वानुपलम्भात्। अनुपलब्धिश्चेदभावहेतुः सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं वोपलभ्यते। तस्मात्सर्वस्यैवाभावोऽस्तु? न, "मृत्युनैवेदमावृतमासीत्" इति श्रुतेः। यदि हि किंचिदपि नाऽऽसीद्येनाऽऽव्रियते यच्चाऽऽव्रियते तदा नावक्ष्यन्मृत्युनैवेदमावृतमिति। न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति। ब्रवीति च **मृत्युनैवेदमावृतमासीदि**ति।

तस्माद्येनाऽऽवृतं कारणेन यच्चाऽऽवृतं कार्यं, प्रागुत्पत्तेस्तदुभयमासीच्छ्रुतेः प्रामाण्यादनुमेयत्वाच्च। अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम्। कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्, असति चादर्शनात्। जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते, घटादिकारणास्तित्ववत्।

घटादिकारणस्याप्यसत्त्वमेवानुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेन्न। मृदादेः कारणत्वात्। मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेर्न पिण्डाद्याकारविशेषः। तदभावे भावात्। असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते। तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम्। असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायते इति मृत्सुवर्णादिद्रव्यमेव कारणं नतु पिण्डाकारविशेषः। सर्वं हि कारणं कार्यमुत्पादयत्पूर्वोत्पन्नस्याऽऽत्मकार्यस्य तिरोधानं कुर्वत्कार्यान्तरमुत्पादयति। एकस्मिन्कारणे युगपदनेककार्यविरोधात्। न च पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति। तस्मात्पिण्डाद्युपमर्दे कार्योत्पत्तिदर्शनमहेतुः प्रागुत्पत्तेः कारणासत्त्वे।

पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्। पिण्डादिपूर्वकार्योपमर्दे मृदादिकारणं नोपमृद्यते घटादिकार्यान्तरेऽप्यनुवर्तत इत्येतदयुक्तम्। पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलम्भादिति चेन्न। मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तौ चानुवृत्तिदर्शनात्। सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेन्न। पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः।

न च प्रत्यक्षानुमानयोर्विरुद्धाऽव्यभिचारिता। प्रत्यक्षपूर्वकत्वादनुमानस्य, सर्वत्रैवानाश्वासप्रसङ्गात्। यदि च क्षणिकं सर्वं तदेवेदमिति गम्यमानं तद्बुद्धेरप्यन्यतद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यद्बुद्ध्यपेक्षत्वमित्यनवस्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात्सर्वत्रानाश्वासतैव। तदिदंबुद्ध्योरपि कर्त्रभावे संबन्धानुपपत्तिः। सादृश्यात्तत्संबन्ध इति चेन्न। तदिदंबुद्ध्योरितरेतरविषयत्वानुपपत्तेः। असति चेतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः।

असत्येव सादृश्ये, तद्बुद्धिरिति चेन्न। तदिदंबुद्ध्योरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसङ्गात्। असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेन्न। बुद्धिबुद्धेरप्यसद्विषयत्वप्रसङ्गात्। तदप्यस्त्विति चेन्न। सर्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः। तस्मादसदेतत्सादृश्यात्तद्बुद्धिरिति। अतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः। कार्यस्य चाभिव्यक्तिलिङ्गत्वात् कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः।

कथमभिव्यक्तिलिङ्गत्वादभिव्यक्तिर्लिङ्गमस्येति। अभिव्यक्तिः साक्षाद्विज्ञानालम्बनत्वप्राप्तिः। यद्धि लोके प्रावृतं तमआदिना घटादि वस्तु, तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत्प्राक्सद्भावं न व्यभिचरति। तथेदमपि जगत्प्रागुत्पत्तेरित्यवगच्छामः। न ह्यविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते।

न। तेऽविद्यमानत्वाभावादुपलभ्येतैवेति चेत्। न हि तव घटादिकार्यं कदाचिदप्यविद्यमानमित्युदित आदित्य उपलभ्येतैव। मृत्पिण्डेऽसंनिहिते तमआद्यावरणे चासति विद्यमानत्वादिति चेत्। न। द्विविधत्वादावरणस्य। घटादिकार्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य तमः कुड्यादि, प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्यान्तररूपेण संस्थानम्। तस्मात्प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्याऽऽवृतत्वादनुपलब्धिः। नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः।

पिण्डकपालादेरावरणवैलक्षण्यादयुक्तमिति चेत्। तमः कुड्यादि हि घटा-

द्यावरणं घटादिभिन्नदेशं दृष्टं, न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले। तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव घटस्याऽऽवृतत्वादनुपलब्धिरित्ययुक्तमावरणधर्मवैलक्षण्यादिति चेत्। न। क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात्। घटादिकार्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्वमिति चेत्। न। विभक्तानां कार्यान्तरत्वादावरणत्वोपपत्तेः।

आवरणाभाव एव यत्नः कर्तव्य इति चेत्पिण्डकपालावस्थयोर्विद्यमानमेव घटादिकार्यमावृतत्वान्नोपलभ्यत इति चेत्। घटादिकार्यार्थिना तदावरणविनाशे एव यत्नः कर्त्तव्यो न घटाद्युत्पत्तौ। न चैतदस्ति। तस्मादयुक्तं, विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिरिति चेत्। न। अनियमात्। न हि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता। तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात्। सोऽपि तमोनाशायैवेति चेत्। दीपाद्युत्पत्तावपि यः प्रयत्नः, सोऽपि तमस्तिरस्करणाय, तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते। न हि घटे किंचिदाधीयत इति चेत्। न, प्रकाशवतो घटस्योपलभ्यमानत्वात्। यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणेन, न तथा प्राक्प्रदीपकरणात्। तस्मान्न तमस्तिरस्कारायैव प्रदीपकरणं किं तर्हि प्रकाशवत्त्वाय। प्रकाशवत्त्वेनैवोपलभ्यमानत्वात् क्वचिदावरणविनाशेऽपि यत्नः स्यात्। यथा कुड्यादिविनाशे। तस्मान्न नियमोऽस्त्यभिव्यक्त्यर्थिनाऽऽवरणविनाश एव यत्नः कार्य इति।

नियमार्थवत्त्वाच्च। कारणे वर्तमानं कार्यं कार्यान्तराणामावरणमित्यवोचाम। तत्र यदि पूर्वाभिव्यक्तस्य कार्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विनाश एव यत्नः क्रियेत। तदा विदलचूर्णाद्यपि कार्यं जायेत। तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव। तस्माद्घटाद्यभिव्यक्त्यर्थिनो नियत एव कारकव्यापारोऽर्थवान्। तस्मात्प्रागुत्पत्तेरपि सदेव कार्यम्।

अतीतानागतप्रत्ययभेदाच्च। अतीतो घटोऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्तमानघटप्रत्ययवन्न निर्विषयत्वं युक्तम्। अनागतार्थिप्रवृत्तेश्च। न ह्यसत्यर्थितया

प्रवृत्तिर्लोके दृष्टा। योगिनां चातीतानागतज्ञानस्य सत्यत्वात्। असंश्चेद्भविष्यद्घट ऐश्वरं भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात्। न च प्रत्यक्षमुपचर्यते। घट-सद्भावे ह्यनुमानमवोचाम। विप्रतिषेधाच्च। यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं प्रमाणेन निश्चितम्। येन च कालेन घटस्य संबन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते। भविष्य-न्घटोऽसन्निति न भविष्यतीत्यर्थः। अयं घटो न वर्तत इति यद्वत्।

अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्येत घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्तमानास्तावत्कुलालादयस्तथा घटो न वर्तत इत्यसच्छब्दस्यार्थश्चेन्न विरुध्यते। कस्मात्? स्वेन हि भविष्यद्रूपेण घटो वर्तते। न हि पिण्डस्य वर्तमानता कपालस्य वा घटस्य भवति। न च तयोर्भविष्यत्ता घटस्य। तस्मात्कुलालादिव्यापार-वर्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते। यदि घटस्य यत्स्वं भविष्यत्ता-कार्यरूपं तत्प्रतिषिध्येत। तत्प्रतिषेधे विरोधः स्यात् नतु तद्भवान्प्रतिषेधति। न च सर्वेषां क्रियावतामेकैव वर्तमानता भविष्यत्त्वं वा।

अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः पटादिरेव न घटस्वरूपमेव। न च घटाभावः सन्पटोऽभावात्मकः किं तर्हि भावरूप एव। एवं घटस्य प्राक्प्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं स्यात्। घटेन व्यपदिश्यमानत्वाद्घटस्येतरेतराभाववत्। तथैव भावात्मकताऽभावानाम्। एवं च सति घटस्य प्रागभाव इति। न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति।

अथ घटस्य प्रागभाव इति घटस्य यत्स्वरूपं तदेवोच्येत। घटस्येतिव्यपदेशा-नुपपत्तिः। अथ कल्पयित्वा व्यपदिश्येत, शिलापुत्रकस्य शरीरमिति यद्वत्। तथाऽपि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव। अथार्थान्तरं घटाद्घटस्याभाव इत्युक्तोत्तरमेतत्। किंचान्यत्प्रागुत्पत्तेः शशविषाणवद-

भावभूतस्य घटस्य स्वकारणसत्तासंबन्धानुपपत्तिः। द्विनिष्ठत्वात्संबन्धस्य। अयुतसिद्धानामदोष इति चेत्। न। भावाभावयोरयुतसिद्धत्वानुपपत्तेः। भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्न तु भावाभावयोरभावयोर्वा। तस्मात्सदेव कार्यं प्रागुत्पत्तेरिति सिद्धम्।

किंलक्षणेन मृत्युनाऽऽवृतमित्यत आह— **अशनायया**ऽशितुमिच्छाऽश**नाया** सैव मृत्योर्लक्षणं तया लक्षितेन मृत्युनाऽशनायया। कथमशनाया मृत्युरिति। उच्यते — अशनाया **हि मृत्युः**। हिशब्देन प्रसिद्धं हेतुमवद्योतयति। यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून्। तेनासावशनायया लक्ष्यते मृत्युरित्यशनाया हीत्याह। बुद्ध्यात्मनोऽशनाया धर्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते। तेन **मृत्युनेदं** कार्य**मावृतमासीत्**। यथा पिण्डावस्थया मृदा घटादय आवृताः स्युरिति तद्वत्। **तन्मनोऽकुरुत**। तदिति मनसो निर्देशः। स प्रकृतो मृत्युर्वक्ष्यमाणकार्यसिसृक्षया तत्कार्यालोचनक्षमं मनःशब्दवाच्यं संकल्पादिलक्षणमन्तःकरण**मकुरुत** कृतवान्। केनाभिप्रायेण मनोऽकरोदिति। उच्यते— **आत्मन्व्यात्मवान्स्यां** भवेयम्। अहमनेनाऽऽत्मना मनसा मनस्वी स्यामित्यभिप्रायः।

**स** प्रजापतिरभिव्यक्तेन मनसा समनस्कः स**न्नर्चन्न**र्चयन्पूजयन्नात्मानमेव कृतार्थोऽस्मीत्य**चरच्च**रणमकरोत्। **तस्य** प्रजापते**रर्चतः** पूजयत **आपो** रसात्मिकाः पूजाङ्गभूता **अजायन्तो**त्पन्नाः। अत्राऽऽकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यं श्रुत्यन्तरसामर्थ्याद्विकल्पासंभवाच्च सृष्टिक्रमस्य। **अर्चते** पूजां कुर्वते **वै मे** मह्यं **कमु**दकम**भूदित्येव**ममन्यत, यस्मान्मृत्युस्त**देव**हेतोर**र्कस्या**ग्नेरश्वमेधक्रतूपयोगिकस्या**र्क**त्वमर्कत्वे हेतुरित्यर्थः। अग्नेरर्कनामनिर्वचनमेतत्। अर्चनात्सुखहेतुपूजाकरणादप्संबन्धाच्चाग्नेरेतद्गौणं नामार्क इति। **य एवं** यथोक्तम**र्कस्यार्कत्वं वेद** जानाति। **कमु**दकं सुखं वा नामसामान्यात्। **ह वा** इत्यवधारणार्थौ भवत्येवेति। **अस्मा** एवंविद एवंविदर्थं **भवति**॥१॥

आपो वा अर्कस्तद्यदपाᳬ शर आसीत्तत्समहन्यत।
सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य
तेजोरसो निरवर्तताग्निः ॥२॥

स त्रेधाऽऽत्मानं व्यकुरुताऽऽदित्यं तृतीयं वायुं
तृतीयᳬ स एष प्राणस्त्रेधा विहितः। तस्य प्राची

जल ही अर्क है, (क्योंकि अर्क नामक अग्नि का वह हेतु है) उन जलों का जो (घृतपिण्ड के समान) स्थूलभाग था, वह एकत्रित हो गया और वही पृथिवी हो गया, अर्थात् जल से ब्रह्माण्ड निष्पन्न हुआ। उसके उत्पन्न होने पर वह प्रजापति रूप मृत्यु थक गया, उस थके हुए प्रजापति के शरीर से उसका सारभूत तेजोरस अग्नि निकल आया ॥२॥

उस प्रजापति ने अपने को तीन प्रकार से विभक्त किया, उसने (अग्नि और वायु

---

**आपो वा अर्कः**। कः पुनरसावर्क इति। उच्यते— **आपो वै या** अर्चनाङ्गभूतास्ता **एवार्को**ऽग्नेरर्कस्य हेतुत्वात्। अप्सु चाग्निः प्रतिष्ठित इति। न पुनः साक्षादेवार्कस्ताः। तासामप्रकरणात्। अग्नेश्च प्रकरणम्। वक्ष्यति चायमग्निरर्क इति। **तत्त्त्र यदपां शर** इव शरो दध्न इव मण्डभूत**मासीत्तत्समहन्यत** संघातमापद्यत तेजसा बाह्यान्तःपच्यमानं, लिङ्गव्यत्ययेन वा योऽपां शरः स समहन्यतेति। **सा पृथिव्यभवत्स** संघातो येयं पृथिवी साऽभवत्। ताभ्योऽद्भ्योऽण्डमभिनिर्वृत्तमित्यर्थः। **तस्यां** पृथिव्यामुत्पादितायां स मृत्युः प्रजापति**रश्राम्यच्छ्र**मयुक्तो बभूव। सर्वो हि लोकः कार्यं कृत्वा श्राम्यति। प्रजापतेश्च तन्महत्कार्यं यत्पृथिवीसर्गः। किं तस्य श्रान्तस्येत्युच्यते— **तस्य श्रान्तस्य तप्तस्य** खिन्नस्य **तेजोरसस्तेज** एव रसस्तेजोरसो रसः सारो **निरवर्तत** प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः। कोऽसौ निष्क्रान्तो**ऽग्निः** सोऽण्डस्यान्तर्विराट्प्रजापतिः प्रथमजः कार्यकरणसंघातवाञ्जातः। "स वै शरीरी प्रथमः" इति स्मरणात् ॥२॥

**स च जातः** प्रजापति**स्त्रेधा** त्रिप्रकार**मात्मानं** स्वयमेव कार्यकरणसंघातं

**दिक्शिरोऽसौ चासौ चेर्मौ। अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो, यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान्॥३॥**

की अपेक्षा) आदित्य को तीन संख्याओं का पूरक बनाया। ऐसे ही वायु को तीसरा बनाया (और अग्नि को भी तीसरा बनाया) इस प्रकार यह प्राण (अग्नि वायु और आदित्य इन) तीन भागों में विभक्त हो गया। उसकी पूर्वदिशा शिर है तथा ईशान्य और आग्नेयी विदिशाएँ भुजाएँ हैं। वैसे ही पश्चिम दिशा इसकी पुच्छ है और वायव्य तथा नैर्ऋत्य विदिशाएँ जंघाएँ हैं। दक्षिण और उत्तर दिशाएँ उसके पार्श्व भाग हैं, द्युलोक पृष्ठ भाग है, अन्तरिक्ष उदर है और (अधोभाग में समानता होने के कारण) यह पृथिवी हृदय है। यह लोकादि स्वरूप प्रजापति अग्नि जल में स्थित है, इसे इस प्रकार अग्नि का जल में स्थित होना जानने वाला पुरुष जहाँ कहीं जाता है, वहाँ ही प्रतिष्ठित होता है॥३॥

---

**व्यकुरुत** व्यभजदित्येतत्। कथं त्रेधेत्याह— **आदित्यं तृतीय**मग्निवाय्वपेक्षया त्रयाणां पूरणमकुरुतेत्यनुवर्तते। तथाऽग्न्यादित्यापेक्षया **वायुं तृतीयम्**। तथा वाय्वादित्यापेक्षयाऽग्निं तृतीयमिति द्रष्टव्यम्। सामर्थ्यस्य तुल्यत्वात्त्रयाणां संख्यापूरणत्वे। **स एष प्राणः** सर्वभूतानामात्माऽप्यग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मूर्त्यात्मना **त्रेधा विहितो** विभक्तो न विराट्स्वरूपोपमर्दनेन। तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते। सर्वा हि पूर्वोक्तोत्पत्तिरस्य स्तुत्यर्थेत्यवोचाम— इत्थमसौ शुद्धजन्मेति। **तस्य प्राची दिक्शिरो** विशिष्टत्वसामान्यात्। **असौ चासौ** चैशान्याग्नेय्यावी**र्मौ** बाहू। ईरयतेर्गतिकर्मणः। **अथास्याग्नेः प्रतीची दिक्पुच्छं** जघन्यो भागः। प्राङ्मुखस्य प्रत्यग्दिक्संबन्धात्। **असौ चासौ च** वायव्यनैर्ऋत्यौ **सक्थ्यौ** सक्थिनी पृष्ठकोणत्वसामान्यात्। **दक्षिणा चोदीची च पार्श्वे** उभयदिक्संबन्धसामान्यात्।

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस, तमेतावन्तं कालमबिभः। यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत्॥४॥**

उस मृत्यु ने कामना की कि मेरा दूसरा शरीर उत्पन्न हो (जिसमें मैं शरीर धारी हो जाऊँ), इसीलिये उस क्षुधा में उपलक्षित मृत्यु ने मन के द्वारा वेदत्रयी की आलोचना की अर्थात् वेदविहित सृष्टिक्रम का मन से विचार किया। उससे जो वीर्य हुआ, वह सम्वत्सर बन गया, इससे पूर्व संवत्सर नहीं था। उस संवत्सर काल निर्माता गर्भस्थ प्रजापति को मृत्युरूप प्रजापति उतने समय तक गर्भ में धारण किये रहा जितना संवत्सर का परिमाण होता है। इतने समय के बाद उससे उसकी सृष्टि की अर्थात् उस अण्डे को फोड़ दिया। उस उत्पन्न हुए प्रथम शरीरी कुमार अग्नि के प्रति भक्षण के लिये मुख फाड़ा, स्वाभाविक अविद्या से युक्त होने के कारण उसने डरकर 'भाण' ऐसा शब्द किया, वही वाक् (शब्द) हुआ॥४॥

---

**द्यौः पृष्ठमन्तरिक्षमुदरमिति** पूर्ववत्। **इयमुरः**। अधोभागत्वसामान्यात्। **स एषोऽग्निः** प्रजापतिरूपो लोकाद्यात्मकोऽग्निर**प्सु प्रतिष्ठितः**। "एवमिमे लोका अप्स्वन्तः" इति श्रुतेः। **यत्र क्व च** यस्मिन्कस्मिंश्चि**देति** गच्छति **तदेव** तत्रैव **प्रतितिष्ठति** स्थितिं लभते। कोऽसौ? **एवं** यथोक्तमप्सु प्रतिष्ठितत्वमग्ने**र्विद्वा**न्विजानन्गुणफलमेतत्॥३॥

**सोऽकामयत**— योऽसौ मृत्युः सोऽबादिक्रमेणाऽऽत्मनाऽऽत्मानमण्डस्यान्तः कार्यकरणसंघातवन्तं विराजमग्निमसृजत त्रेधा चाऽऽत्मानमकुरुतेत्युक्तम्। स किंव्यापारः सन्नसृजतेति। उच्यते— **स** मृत्यु**रकामयत** कामितवान्। किम्। **द्वितीयो**

# स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्ये इति स तया वाचा तेनाऽऽत्मनेदꣳ सर्वमसृजत यदिदं

उस मृत्यु ने विचार किया, यदि मैं इस कुमार को मार डालूंगा तो मैं यह बहुत ही थोड़ा भोजन करूँगा। अतः उसने उस वाणी और उस मन के द्वारा इन सबकी सृष्टि

---

**मे ममाऽऽत्मा** शरीरं येनाहं शरीरी स्यां स **जायेतो**त्पद्येतेत्येवमेतदकामयत। **स** एवं कामयित्वा **मनसा** पूर्वोत्पन्नेन **वाचं** त्रयीलक्षणां **मिथुनं** द्वंद्वभावं **समभवत्**संभवनं कृतवान्मनसा त्रयीमालोचितवांस्त्रयीविहितं सृष्टिक्रमं मनसाऽन्वालोचयदित्यर्थः। कोऽसावशनायया लक्षितो **मृत्युः। अशनाया** मृत्युरित्युक्तम्। तमेव परामृशत्यन्यत्र प्रसङ्गो मा भूदिति। तद्यद्रेत आसीत्। तत्तत्र मिथुने **यद्रेत आसीत्**प्रथमशरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो बीजं ज्ञानकर्मरूपं त्रय्यालोचनायां यद्दृष्टवानासीज्जन्मान्तरकृतम्। तद्भावभावितोऽपः सृष्ट्वा तेन रेतसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः **स संवत्सरोऽभवत्**संवत्सरकालनिर्माता संवत्सरः प्रजापतिरभवत्।

**न ह पुरा** पूर्वं ततस्तस्मात्संवत्सरकालनिर्मातुः प्रजापतेः **संवत्सरः** कालो नाम **नाऽऽस** न बभूव ह। तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह प्रसिद्धः काल **एतावन्त**मेतावत्संवत्सरपरिमाणं **कालमबिभ**र्भृतवान्मृत्युः। **यावान्संवत्सर** इह प्रसिद्धस्ततः परस्तात्किं कृतवान्। **तमेतावतः कालस्य** संवत्सरमात्रस्य **परस्तादूर्ध्वमसृजत** सृष्टवानण्डमभिनदित्यर्थः। **तमेवं** कुमारं **जातमग्निं** प्रथमशरीरिणमशनायावत्त्वान्मृत्यु**रभिव्याददा**न्मुखविदारणं कृतवानत्तुम्। **स** च कुमारो भीतः स्वाभाविक्याऽविद्यया युक्तो **भाणित्येवं** शब्द**मकरोत्। सैव वागभवद्वा**क्शब्दोऽभवत्॥४॥

**स ऐक्षत स** एवं भीतं कृतरवं कुमारं दृष्ट्वा मृत्यु**रैक्षत**ेक्षितवान्। अशनायावानपि **यदि** कदाचिद्**वा इमं** कुमार**मभिमंस्ये**। अभिपूर्वो मन्यति–

विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः

**किंचर्चो यजूꣳषि सामानि छन्दाꣳसि यज्ञान्प्रजाः पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वꣳ, सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति, य एवमेतददितेरदितित्वं वेद॥५॥**

की जो कुछ भी ये ऋक्, यजु, साम, छन्द, यज्ञ, प्रजा तथा पशु हैं— (इन सभी को बनाया)। उसने जिस-जिस वस्तु की रचना की, उन सभी को खाने का विचार किया, वह सबको खाता है, यही उस अदिति का अदितित्व है। जो इस प्रकार इसके अदितिपन को जानता है, वह इस सभी का भोक्ता हो जाता है और ये सब उसके अन्न हो जाते हैं॥५॥

---

हिंसार्थः। हिंसिष्य इत्यर्थः। **कनीयोऽन्नं करिष्ये** कनीयोऽल्पमन्नं करिष्य **इत्येवमीक्षित्वा** तद्भक्षणादुपरराम। बहु ह्यन्नं कर्तव्यं दीर्घकालभक्षणाय न कनीयः। तद्भक्षणे हि कनीयोऽन्नं स्याद्बीजभक्षण इव सस्याभावः। **स** एवं प्रयोजनमन्न-बाहुल्यमालोच्य **तयैव वाचा** पूर्वोक्तया **तेनैव चाऽऽत्मना** मनसा मिथुनी-भावमालोचनमुपगम्ये**दं सर्वं** स्थावरं जङ्गमं **चासृजत यदिदं किंच** यत्किंचेदम्। किं तत्? **ऋचो यजूंषि सामानि छन्दांसि** च सप्त गायत्र्यादीत्रि स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मन्त्रानायत्र्यादिच्छन्दोविशिष्टान्**यज्ञांश्च** तत्साध्या-**न्प्रजास्तत्कर्त्रीः पशूंश्च** ग्राम्यानारण्यान्कर्मसाधनभूतान्। ननु त्रय्या मिथुनी-भूतयाऽसृजतेत्युक्तमृगादीनीह कथमसृजतेति। नैष दोषः। मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या बाह्यस्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति॥

**स** प्रजापतिरेवमन्नवृद्धिं बुद्ध्वा **यद्यदेव** क्रियां क्रियासाधनं फलं वा किंचि**दसृजत तत्तदत्तुं** भक्षयितु**मध्रियत** धृतवान्मनः **सर्वं** कृत्स्नं **वै** यस्मा-**दत्तीति तत्**तस्मा**ददितेरदिति**नाम्नो मृत्यो**रदितित्वं** प्रसिद्धम्। तथाच मन्त्रः

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्। प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत्॥६॥**

उस प्रजापति ने ऐसी कामना की कि मैं पुनः बड़े भारी अश्वमेधादि यज्ञ के द्वारा यजन करूँ, इसी से वह थक गया। उसने तप किया, उस श्रान्त तथा खिन्न हुए का यश और वीर्य निकल गया। चक्षुरादि प्राण ही यश और वीर्य है। तत्पश्चात् प्राणों के निकल जाने पर शरीर फूलने लग गया, इतने पर भी उसका मन शरीर में ही रहा॥६॥

---

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता" इत्यादिः। **सर्वस्यैतस्य** जगतोऽन्नभूतस्या**त्ता** सर्वात्मनैव **भवत्**यन्यथा विरोधात्। न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते तस्मात्सर्वात्मा भवतीत्यर्थः। **सर्वमस्यान्नं भवत्**यत एव सर्वात्मनो ह्यत्तुः सर्वमन्नं भवतीत्युपपद्यते। **य एवमेतद्**यथोक्त**मदितेर्**मृत्योः प्रजापतेः सर्वस्यादनाददितित्वं **वेद** तस्यैतत्फलम्॥५॥

**सोऽकामयते**त्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह। **भूयसा** महता **यज्ञेन भूयः** पुनरपि **यजेयेति**। जन्मान्तरकरणापेक्षया भूयःशब्दः। **स** प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत। स तद्भावभावित एव कल्पादौ व्यावर्तत। सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत भूयसा यज्ञेन भूयो यजेयेत्येवं महत्कार्यं कामयित्वा लोकवद**श्राम्यत्**। स **तपोऽतप्यत। तस्य श्रान्तस्य तप्तस्येति** पूर्ववत्। **यशो वीर्यमुदक्रामदि**ति स्वयमेव पदार्थमाह। **प्राणाश्**चक्षुरादयो **वै यशो** यशोहेतुत्वात्तेषु हि सत्सु ख्यातिर्भवति। तथा वीर्यं बलमस्मिञ्शरीरे। न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति। तस्मात्प्राणा एव यशो वीर्यं चास्मिञ्शरीरे। तदेवं प्राणलक्षणं यशो वीर्यमुदक्रामदुत्क्रान्तवत्। तदेवं यशो-

अश्वमेध उपासना का फल

सोऽकामयत मेध्यं म इदᳫं स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनवरुध्यैवामन्यत। तᳫं संवत्सरस्य परस्तादात्मने आलभत। पशून्देवताभ्यः प्रत्यौहत्। तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त एष ह वा अश्वमेधो य एष तपति तस्य

मुक्तप्रग्रहम् चिन्तयत

सूर्यः

अर्थवाद तच्च श्मशाने

उसने कामना की कि यह मेरा शरीर यज्ञ के योग्य हो जावे, मैं इस शरीर से शरीर वाला होऊँ, क्योंकि वह शरीर (यश और वीर्य से हीन होकर) फूल गया था। अतः उससे वह अश्व हो गया और वह यज्ञीय हुआ। इसीलिये यही अश्वमेधत्व है— अर्थात् उसे अश्वमेध नाम प्राप्त हुआ। जो इसे इस प्रकार जानता है, वही अश्वमेध को जानता है। उसने उसे बन्धनशून्य ही चिन्तन किया, फिर पूरे एक संवत्सर के बाद अपने लिए ही आलभन किया अर्थात् प्रजापति देवता सम्बन्धी पशुरूप उसका आलभन किया और अन्य पशुओं को भी अन्यान्य देवताओं के प्रति पहुँचाया। इसलिये आज भी याज्ञिक लोग सभी

---

वीर्यभूतेषु **प्राणेषूत्क्रान्तेषु** शरीरान्निष्क्रान्तेषु तच्छ**रीरं** प्रजापतेः **श्वयितुमु**च्छूनभावं गन्तुम**श्रियतामेध्यं** चाभवत्। **तस्य** प्रजापतेः शरीरान्निर्गतस्यापि तस्मि**न्नेव शरीरे मन आसीत्**। यथा कस्यचित्प्रिये विषये दूरं गतस्यापि मनो भवति तद्वत्॥६॥

स तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदिति? उच्यते— **सोऽकामयत,** कथं? **मेध्यं** मेधार्हं यज्ञियं **मे** ममेदं शरीरं **स्यात्**। किंचा**ऽऽत्मन्व्या**त्मवांश्च**ानेन** शरीरेण शरीरवा**न्स्यामिति** प्रविवेश। यस्मात्तच्छरीरं मद्वियोगाद्गतयशोवीर्यं **सदश्वदश्वयत्तत**स्तस्मादश्वः **समभवत्**। ततोऽश्वनामा प्रजापतिरेव साक्षादिति स्तूयते। यस्माच्च पुनस्तत्प्रवेशाद्गतयशोवीर्यत्वादमेध्यं स**न्मेध्यमभूत्तदेव**

संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ। सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवति॥७॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम्॥२॥

देवताओं के लिये मन्त्रों द्वारा संस्कृत प्रजापति सम्बन्धी पशु का आलभन करते हैं। यह जो सूर्य तपता है, यही अश्वमेध है; उस सूर्य का संवत्सर शरीर है, यह पार्थिव अग्नि अर्क है, तथा उसके ये आदित्यादि लोक आत्मा हैं, ये अग्नि और आदित्य अर्क एवं अश्वमेध हैं, किन्तु वे मृत्युरूप देवता एक ही है। जो इस प्रकार (इस अश्वमेध को मृत्युरूप एक देवता) जानता है, वह पुनर्मृत्यु को जीत लेता है। इसे मृत्यु प्राप्त नहीं करता, मृत्यु तो उसकी आत्मा हो जाता है, तथा वह इन देवताओं में से ही कोई एक हो जाता है (उस उपासक को यही फल प्राप्त हो जाता है)॥७॥

॥इति द्वितीयं ब्राह्मणम्॥

---

तस्मादेवा**श्वमेधस्या**श्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनामलाभः। क्रियाकारकफलात्मको हि क्रतुः। स च प्रजापतिरेवेति स्तूयते।

क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तमुषा वा अश्वस्य मेध्यस्येत्यादिना। तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्याग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया समस्योपासनं विधातव्यमित्यारभ्यते। पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात्क्रियापदापेक्षत्वाच्च प्रकरणस्यायमर्थोऽवगम्यते। **एष ह वा अश्वमेधं क्रतुं वेद यः** कश्चिदेनमश्वमग्निरूपमर्कं च यथोक्तमेवं वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं **वेद** स एषोऽश्वमेधं वेद नान्यः। तस्मादेवं वेदितव्य इत्यर्थः।

कथं, तत्र पशुविषयमेव तावद्दर्शनमाह। तत्र प्रजापतिर्भूयसा यज्ञेन भूयो

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञाऽस्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय॥१३॥**

उस मैत्रेयी ने कहा कि देहपात के बाद कोई संज्ञा नहीं रहती, ऐसा कहकर आपने मुझे मोह में डाल दिया (संज्ञा के अभाव में भला विज्ञानघन की सत्ता कैसे मानी जा सकती है)। याज्ञवल्क्य ने कहा — हे मैत्रेयी! मैं तुझे मोह का उपदेश नहीं कर रहा हूँ, किन्तु अरी प्रिया! यह तो महद्भूत परमात्मा का बोध कराने के लिए पर्याप्त है (अविद्याजन्य उपाधि के कारण उस विज्ञान में खिल्यभाव है, वह खिल्यभाव देहपात के अनन्तर या उपाधियों के अभाव हो जाने पर नहीं रह जाता)॥१३॥

---

एवं प्रतिबोधिता **सा ह** किलो**वाचो**क्तवती **मैत्रेयी**। **अत्रै**वैतस्मिन्नेवैकस्मिन्वस्तुनि ब्रह्मणि विरुद्धधर्मवत्त्वमाचक्षाणेन भगवता मम मोहः कृतस्तदाह। **अत्रैव मा भगवान्**पूजावान**मूमुहन्**मोहं कृतवान्। कथं तेन विरुद्धधर्मवत्त्वमुक्तमित्युच्यते — पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न **प्रेत्य संज्ञाऽस्तीति**। कथं विज्ञानघन एव, कथं वा न प्रेत्य संज्ञाऽस्तीति। न ह्युष्णः शीतश्चाग्निरेवैको भवति। अतो मूढाऽस्म्यत्र। **स होवाच याज्ञवल्क्यो न वा अरे मैत्रेय्यहं मोहं ब्रवीमि** मोहनं वाक्यं न ब्रवीमीत्यर्थः। ननु कथं विरुद्धधर्मत्वमवोचो विज्ञानघनं संज्ञाभावं च। न मयेदमेकस्मिन्धर्मिण्यभिहितम्। त्वयैवेदं विरुद्धधर्मत्वेनैकं वस्तु परिगृहीतं भ्रान्त्या, न तु मयोक्तम्। मया त्विदमुक्तं यस्त्वविद्याप्रत्युपस्थापितः कार्यकरणसंबन्ध्यात्मनः खिल्यभावस्तस्मिन्विद्यया नाशिते, तन्निमित्ता या विशेषसंज्ञा शरीरादिसंबन्धिन्यन्यत्वदर्शनलक्षणा, सा कार्यकरणसंघातोपाधौ प्रविलापिते नश्यति, हेत्वभावादुदकाद्याधारनाशादिव चन्द्रादिप्रतिबिम्बस्तन्निमित्तश्च प्रकाशादिः। न पुनः परमार्थचन्द्रादित्यस्वरूपानाशवदसंसारिब्रह्मस्वरूपस्य नाशः। तद्विज्ञानघनः इत्युक्तं, स आत्मा सर्वस्य जगतः परमार्थतो भूतनाशान्न विनाशी। विनाशी

* आत्म विद्या अश्विनी देवताओं को. शिर कटवाकर.
दधीचि महादेव = वकारा का शिरः गणेश.



(अविद्यावस्था में द्वैत की प्रतीति)

यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्व-मात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्त-त्केन कꣳ शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात्। येनेदꣳ सर्वं

जिस अविद्या अवस्था में (परमार्थतः अद्वैत ब्रह्म में) द्वैत सा प्रतीत होता है; वहाँ पर ही अन्य-अन्य को सूँघता है, अन्य-अन्य को देखता है, अन्य-अन्य को सुनता है, अन्य-अन्य का अभिवादन करता है, अन्य-अन्य का मनन करता है तथा अन्य-अन्य को जानता है। इसके अतिरिक्त जहाँ पर सब आत्मा ही हो गया, वहाँ किससे किसको सूँघे, किससे किसको देखे, किससे किसको सुने, किससे किसका अभिवादन करे, किससे किसका

---

त्वविद्याकृतखिल्यभावो "वाचारम्भणं विकारो नामधेयम्" इति श्रुत्यन्तरात्। अयं तु पारमार्थिकोऽविनाशी वा अरेऽयमात्मा। अतोऽलं पर्याप्तं **वा अर इदं** महद्-भूतमनन्तमपारं यथाव्याख्यातं **विज्ञानाय** विज्ञातुम्। "न हि विज्ञातुर्विज्ञातेर्विप-रिलोपो विद्यतेऽविनाशित्वात्" इति हि वक्ष्यति॥१३॥

कथं तर्हि प्रेत्य संज्ञा नास्तीत्युच्यते? शृणु। **यत्र** यस्मिन्नविद्याकल्पिते कार्यकरणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे हि यस्माद्**द्वैतमिव** परमार्थ-तोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमात्मन उपलक्ष्यते। ननु द्वैतेनोपमी-यमानत्वाद्द्वैतस्य पारमार्थिकत्वमिति। न। "वाचारम्भणं विकारो नामधेयम्" इति श्रुत्यन्तरात्, "एकमेवाद्वितीयम्" "आत्मैवेदं सर्वम्" इति च। तत्तत्र यस्माद्द्वैतमिव तस्मादेवेतरोऽसौ परमात्मनः खिल्यभूत आत्माऽपरमार्थश्चन्द्रादेरिवोदकचन्द्रादिप्रतिबिम्बः

गोपियों का मन कृष्ण के साथ मथुरा चला गया। अब उद्धव का उपदेश किस मन से सुनें।



## विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥ अपूर्णता ③

## इति बृहदारण्यकोपनिषदि द्वितीयाध्याये

## मैत्रेयीनामचतुर्थं ब्राह्मणम् ॥४॥

वस्तु तन्त्रः ; प्रमाण तन्त्रः आत्मा इसीलिये द्रष्टव्यः में विधि नहीं किन्तु "अर्हे कृत्यः" सूत्र से अर्हार्थे

मनन करे, किससे किसको जाने? वस्तुतः जिससे इन सभी को जानता है, उसे किससे जाने? हे मैत्रेयी! (भला बतलाओ तो सही) विज्ञाता को किससे जाने॥१४॥

॥इति चतुर्थं ब्राह्मणम्॥

---

**इतरो** घ्रातेतरेण घ्राणे**नेतरं** घ्रातव्यं **जिघ्रति। इतरःइतर**मिति कारकप्रदर्शनार्थं जिघ्रतीति क्रियाफलयोरभिधानम्। यथा छिनत्तीति यथोद्यम्योद्यम्य निपातनं छेद्यस्य च द्वैधीभाव उभयं छिनत्तीत्येकेनैव शब्देनाभिधीयते क्रियायाः फलत्त्वावसानत्वात्क्रिया-व्यतिरेकेण च तत्फलस्यानुपलम्भात्। इतरो घ्रातेतरेण घ्राणेनेतरं घ्रातव्यं जिघ्रति तथा। सर्वं पूर्ववत्। इयमविद्यावदवस्था।

यत्र तु ब्रह्मविद्ययाऽविद्या नाशमुपगमिता, तत्राऽऽत्मव्यतिरेकेणान्यस्याभावः। **यत्र वा अस्य** ब्रह्मविदः **सर्वं** नामरूपाद्यात्मन्येव प्रविलापित**मात्मैव** संवृत्तं यत्रैव**मात्मैवाभूत्तत्त्र केन** करणेन **कं** घ्रातव्यं को **जिघ्रेत्तथा पश्येद्वि**-जानीयात्। सर्वत्र हि कारकसाध्या क्रिया। अतः कारकाभावेऽनुपपत्तिः क्रियायाः। क्रियाभावे च फलाभावः। तस्मादविद्यायामेव सत्यां क्रियाकारकफलव्यवहारो न ब्रह्मविदः। आत्मत्वादेव सर्वस्य नाऽऽत्मव्यतिरेकेण कारकं क्रियाफलं वाऽस्ति। न चानात्मा सन्सर्वमात्मैव भवति कस्यचित्। तस्मादविद्ययैवानात्मत्वं परिकल्पितं, न तु परमार्थत आत्मव्यतिरेकेणास्ति किंचित्। तस्मात्परमार्थात्मैकत्वप्रत्यये क्रिया-कारकफलप्रत्ययानुपपत्तिः। अतो विरोधाद्ब्रह्मविदः क्रियाणां तत्साधनानां चात्य-

न्तमेव निवृत्तिः। केन किमिति क्षेपार्थं वचनं, प्रकारान्तरानुपपत्तिप्रदर्शनार्थम्। केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः। केनचित्कंचित्कश्चित्कथंचिन्न जिघ्रेदेवेत्यर्थः।

यत्राप्यविद्यावस्थायामन्योऽन्यं पश्यति, तत्रापि **येनेदं सर्वं विजानाति तं केन विजानीयाद्** येन विजानाति तस्य करणस्य विज्ञेये विनियुक्तत्वात्। ज्ञातुश्च ज्ञेये एव हि जिज्ञासा नाऽऽत्मनि। न चाग्नेरिवाऽऽत्माऽऽत्मनो विषयो, न चाविषये ज्ञातुर्ज्ञानमुपपद्यते। तस्माद्येनेदं सर्वं विज्ञानाति तं **विज्ञातारं केन** करणेन को वाऽन्यो **विजानीयात्**। यदा तु पुनः परमार्थविवेकिनो ब्रह्मविदो विज्ञातैव केवलोऽद्वयो वर्तते, तं विज्ञातारमरे केन विज्ञानीयादिति॥१४॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य मैत्रेयीनामचतुर्थं ब्राह्मणम्॥४॥

।अथ द्वितीयाध्यायस्य मधुनामपञ्चमं ब्राह्मणम्।

यत्केवलं कर्मनिरपेक्षममृतत्वसाधनं तद्वक्तव्यमिति मैत्रेयीब्राह्मणमारब्धम्। तच्चाऽऽत्मज्ञानं सर्वसंन्यासाङ्गविशिष्टम्। आत्मनि च विज्ञाते सर्वमिदं विज्ञातं भवति। आत्मा च प्रियः सर्वस्मात्। तस्मादात्मा द्रष्टव्यः स च श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च दर्शनप्रकारा उक्ताः। तत्र श्रोतव्यः आचार्यागमाभ्याम्। मन्तव्यस्तर्कतः। तत्र च तर्क उक्त आत्मैवेदं सर्वमिति प्रतिज्ञातस्य हेतुवचनमात्मैकसामान्यत्वमात्मैकोद्भवत्वमात्मैकप्रलयत्वं च। तत्रायं हेतुरसिद्ध इत्याशङ्क्यत आत्मैकसामान्योद्भवप्रलयाख्यस्तदाशङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते।

यस्मात्परस्परोपकार्योपकारकभूतं जगत्सर्वं पृथिव्यादि। यच्च लोके परस्परोपकार्योपकारकभूतं, तदेककारणपूर्वकमेकसामान्यात्मकमेकप्रलयं च दृष्टम्। तस्मादिदमपि पृथिव्यादिलक्षणं जगत्परस्परोपकार्योपकारकत्वात्तथाभूतं भवितुमर्हति। एष ह्यर्थोऽस्मिन्ब्राह्मणे प्रकाश्यते। अथवाऽऽत्मैवेदं सर्वमिति प्रतिज्ञातस्याऽऽत्मोत्पत्ति-

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१॥**

यह प्रसिद्ध पृथिवी (ब्रह्मा से लेकर स्तम्बपर्यन्त) समस्त भूतों का मधु है (जैसे अनेक मधुकर मधु के छत्ते को बनाते हैं, ऐसे ही समस्त भूतों ने इसे बनाया है) और ऐसे ही समस्त भूत इस पृथिवी के मधु हैं। इस पृथिवी में जो यह चिन्मात्र प्रकाशमय और अमृतमय पुरुष है तथा जो यह अध्यात्म शारीर तेजोमय अमरणधर्मा पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस वाक्य से बतलाया गया है)। यह अमृत है, यह ब्रह्म है और यह सर्वरूप है (क्योंकि ब्रह्म का ज्ञान होने पर वह तत्त्ववेत्ता सर्वरूप हो जाता है)॥१॥

---

स्थितिलयत्वं हेतुमुक्त्वा पुनरागमप्रधानेन मधुब्राह्मणेन प्रतिज्ञातस्यार्थस्य निगमनं क्रियते। तथाहि नैयायिकैरुक्तं हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति। अन्यैर्व्याख्यातम्— आदुन्दुभिदृष्टान्ताच्छ्रोतव्यार्थमागमवचनं प्राङ्मधुब्राह्मणान्मन्तव्यार्थमुपपत्तिप्रदर्शनेन, मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यते इति। सर्वथाऽपि तु यथाऽऽगमेनावधारितं, तर्कतस्तथैव मन्तव्यम्। यथा तर्कतो मतं, तस्य तर्कागमाभ्यां निश्चितस्य तथैव निदिध्यासनं क्रियते इति पृथङ्निदिध्यासनविधिरनर्थक एव। तस्मात्पृथक्प्रकरणविभागोऽनर्थक इत्यस्मदभिप्रायः श्रवणमनननिदिध्यासनानामिति। सर्वथाऽपि त्वध्यायद्वयस्यार्थोऽस्मिन्ब्राह्मणे उपसंह्रियते।

**इयं पृथिवी** प्रसिद्धा **सर्वेषां भूतानां मधु** सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां प्राणिनां मधु कार्यं मध्विव मधु। यथैको मध्वपूपोऽनेकैर्मधुकरै

इमा आपः सर्वेषां भूतानां मध्वासामपाꣳ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम्॥२॥

ऐसे ही ये जल समस्त भूतों के मधु हैं और समस्त भूत इन जलों के मधु हैं। इन जलों में जो चिन्मय अमरणधर्मा पुरुष है तथा यह जो अध्यात्म रैतस तेजोमय, अमृतमय पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य से बतलाया है), यह अमृत है, यह ब्रह्म है और यह सर्वरूप है॥२॥

---

निर्वर्तितः, एवमियं पृथिवी सर्वभूतैर्निर्वर्तिता। तथा सर्वाणि भूतानि पृथिव्यै पृथिव्या अस्या मधु कार्यम्। किं च यश्चायं पुरुषोऽस्यां पृथिव्यां तेजोमयश्चिन्मात्रप्रकाशमयोऽमृतमयोऽमरणधर्मा पुरुषो यश्चायमध्यात्मं शारीरः शरीरे भवः पूर्ववत्तेजोमयोऽमृतमयः पुरुषः। स च लिङ्गाभिमानी। स च सर्वेषां भूतानामुपकारकत्वेन मधु। सर्वाणि च भूतान्यस्य मधु। चशब्दसामर्थ्यात्। एवमेतच्चतुष्टयं तावदेकं सर्वभूतकार्यं सर्वाणि च भूतान्यस्य कार्यम्। अतोऽस्यैककारणपूर्वकता। यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्मेतरत्कार्यं वाचारम्भणं विकारो नामधेयमात्रमित्येष मधुपर्यायाणां सर्वेषामर्थः संक्षेपतः। अयमेव स योऽयं प्रतिज्ञात इदं सर्वं यदयमात्मेति। इदममृतं यन्मैत्रेय्या अमृतत्वसाधनमुक्तमात्मविज्ञानमिदं तदमृतम्। इदं ब्रह्म यद्ब्रह्म ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रकृतं, यद्विषया च विद्या ब्रह्मविद्येत्युच्यत इदं सर्वं यस्माद्ब्रह्मणो विज्ञानात्सर्वं भवति॥१॥

तथाऽऽपः। अध्यात्मं रेतस्यपां विशेषतोऽवस्थानम्॥२॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम्॥३॥

अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम्॥४॥

यह अग्नि समस्त भूतों का मधु है और समस्त भूत इस अग्नि के मधु हैं। इस अग्नि में जो तेजोमय अमरणधर्मा पुरुष है और जो यह अध्यात्म वाङ्मय, तेजोमय, अमृतमय पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है, यही सर्वरूप है॥३॥

इसी प्रकार यह वायु समस्त भूतों का मधु है और समस्त भूत इस वायु के मधु हैं। इस वायु में जो तेजोमय, अमृतमय पुरुष है तथा जो यह अध्यात्म प्राणरूप तेजोमय अमरणधर्मा पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है, यही सर्वरूप है॥४॥

---

तथाऽग्निः। वाच्यग्नेर्विशेषतोऽवस्थानम्॥३॥

तथा वायुः। अध्यात्मं प्राणो भूतानां शरीरारम्भकत्वेनोपकारकान्मधुत्वं

सुतं पततं प्रसवीक्ष्य नारी नोत्थिता: पति सेवात्.
पतिव्रता नारी के जंघे में पति सो रहा है - बालक



* अग्नि में गिरा - किन्तु अग्नि ठंडा हो गया।

अयमादित्यः *सर्वेषां भूतानां मध्वस्याऽऽदित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥५ ॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रोत्रः

परम सति वृन्दा जालन्धर असुराधिप नारी.

यह आदित्य समस्त भूतों का मधु है और समस्त भूत इस आदित्य के मधु हैं। यह जो इस आदित्य में चिन्मय प्रकाशस्वरूप अमरणधर्मा पुरुष है एवं जो यह अध्यात्म चाक्षुष तेजोमय अमृतमय पुरुष है; यही वह है। जो कि ''यह आत्मा है'' (इस वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है॥५॥

तथा ये दिशाएँ समस्त भूतों की मधु हैं और समस्त भूत इन दिशाओं के मधु हैं। यह जो उन दिशाओं में तेजोमय अमृतमय पुरुष है और जो यह अध्यात्म श्रौत्र पुरुष प्रातिश्रुत्क (प्रत्येक श्रवण वेला में रहने वाला) तेजोमय अमृतमय पुरुष है, यही वह है।

---

तदन्तर्गतानां तेजोमयादीनां करणत्वेनोपकारान्मधुत्वम्। तथा चोक्तं ''तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः'' इति॥४॥

तथाऽऽदित्यो मधु। चाक्षुषोऽध्यात्मम्॥५॥

तथा दिशो मधु। दिशां यद्यपि श्रोत्रमध्यात्मं रूपं शब्दप्रतिश्रवणवेलायां

प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥६ ॥

अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥७ ॥

इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजस-

जो कि ''यह आत्मा है'' (इस वाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है और यह सर्वरूप है ॥६ ॥

यह चन्द्रमा समस्त भूतों का मधु है और समस्त भूत इस चन्द्रमा के मधु हैं। यह जो इस चन्द्र में तेजोमय अमृतमय पुरुष है, एवं जो यह अध्यात्म मनसम्बन्धी चिन्मय अमृतमय पुरुष है; यही वह है। जो कि ''यह आत्मा है'' (इस वाक्य से कहा जा चुका है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है ॥७ ॥

यह बिजली समस्त भूतों का मधु है और समस्त भूत इस बिजली के मधु हैं। यह जो इस बिजली में चिन्मय प्रकाशस्वरूप अविनाशी पुरुष है, एवं जो यह अध्यात्म

---

तु विशेषतः संनिहितो भवतीत्यध्यात्मं प्रातिश्रुत्कः प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः ॥६ ॥

तथा **चन्द्रः । अध्यात्मं** मानसः ॥७ ॥

स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदम-
मृतमिदं ब्रह्मेदꣳ सर्वम्॥८॥

अयꣳ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्त-
नयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मि-
न्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चाय-
मध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः
पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ
सर्वम्॥९॥

अयमाकाशः सर्वेषां भूतानां मध्वस्याऽऽका-
शस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे

तैजस तेजोमय अमृतमय पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस वाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है और यह सर्वरूप है॥८॥

इसी प्रकार यह मेघ समस्त भूतों का मधु है और समस्त भूत इस मेघ के मधु हैं। यह जो इस मेघ में तेजोमय अमृतमय पुरुष है, एवं जो यह अध्यात्म शब्द और स्वरसम्बन्धी तेजोमय अमृतमय पुरुष है, यही वह है। जो कि "यह आत्मा है" (इस वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सब कुछ है॥९॥

इसी प्रकार यह आकाश सभी भूतों का मधु है और इस आकाश के सभी भूत मधु हैं। यह जो इस आकाश में चिन्मात्र प्रकाशमय अमरणधर्मा पुरुष है, एवं जो यह

---

तथा **विद्युत्** त्वक्तेजसि भवस्तैजसोऽध्यात्मम्॥८॥

तथा **स्तनयित्नुः**। शब्दे भवः **शाब्दोऽ**ध्यात्मं यद्यपि, तथाऽपि स्वरे विशेषतो भवतीति **सौवरोऽ**ध्यात्मम्॥९॥

तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१०॥

पन्थ निरपेक्ष.

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥११॥

अध्यात्म हृदयाकाशरूप तेजोमय अमृतमय पुरुष है; यही वह है। जो कि ''यह आत्मा है'' (इस प्रतिज्ञा वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सब कुछ है॥१०॥

यह धर्म समस्त भूतों का मधु है और समस्त भूत इस धर्म के मधु हैं (परोक्ष होते हुए भी ''अयं धर्मः'' इस प्रकार धर्म को इसलिये कहा गया है क्योंकि उसका कार्य सुखादि प्रत्यक्ष है) इस धर्म में जो यह तेजोमय अमृतमय पुरुष है एवं जो यह अध्यात्म धर्मसम्बन्धी तेजोमय अमरणधर्मा पुरुष है; यही वह है। जो कि ''यह आत्मा है'' (इस वाक्य से बतलाया गया है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है॥११॥

---

**तथाऽऽकाशः**। अध्यात्मं हृद्याकाशः ॥१०॥

आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकरणसंघातात्मान उपकुर्वन्तो मधु भवन्ति प्रति शरीरिणमित्युक्तम्। येन ते प्रयुक्ताः शरीरिभिः संबध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते—

**अयं धर्मो**ऽयमित्यप्रत्यक्षोऽपि धर्मः कार्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यप-

**इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम्॥१२॥**

यह (अनुष्ठीयमान धर्म सत्यपद वाच्य) सत्य समस्त भूतों का मंधु है और सम्पूर्ण भूत इस सत्य के मधु हैं। (धर्म के समान सत्य आचार भी दो प्रकार का है, वह सामान्यरूप से पृथिव्यादि से सम्बद्ध है और विशेषरूप से देहादि संघात से सम्बन्ध रखता है) यह जो इस सत्य में तेजोमय अमृतमय पुरुष है, जो यह अध्यात्म सत्यसम्बन्धी तेजोमय अमरणधर्मा पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस वाक्य से कहा गया है) यह अमर है, यह ब्रह्म है ओर यही सत्य है॥१२॥

---

दिश्यतेऽयं धर्म इति प्रत्यक्षवत्। धर्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः क्षत्त्रादीनामपि नियन्ता जगतो वैचित्र्यकृत्पृथिव्यादीनां परिणामहेतुत्वात्प्राणिभिरनुष्ठीयमानरूपश्च। तेन चायं धर्म इति प्रत्यक्षेण व्यपदेशः। सत्यधर्मयोश्चाभेदेन निर्देशः कृतः शास्त्राचारलक्षणयोरिह तु भेदेन व्यपदेश एकत्वे सत्यपि। दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात्। यस्त्वदृष्टोऽपूर्वाख्यो धर्मः स सामान्यविशेषात्मनाऽदृष्टेन रूपेण कार्यमारभते। सामान्यरूपेण पृथिव्यादीनां प्रयोक्ता भवति, विशेषरूपेण चाध्यात्मं कार्यकरणसंघातस्य। तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्मे तेजोमयस्तथाऽध्यात्मं कार्यकरणसंघातकर्तरि, धर्मे भवो धार्मः॥११॥

तथा दृष्टेनानुष्ठीयमानेनाऽऽचाररूपेण सत्याख्यो भवति स एव धर्मः। सोऽपि द्विप्रकार एव सामान्यविशेषात्मरूपेण। सामान्यरूपः पृथिव्यादिसमवेतो विशेषरूपः कार्यकरणसंघातसमवेतः। तत्र पृथिव्यादिसमवेते वर्तमानक्रियारूपे सत्ये तथाऽध्यात्मं कार्यकरणसंघातसमवेते सत्ये भवः **सात्यः**। "सत्येन वायुरावाति" इति श्रुत्यन्तरात्॥१२॥

पृथक् करके बतलाने वाला धर्म.

जाति. इदं मानुषथ्ठं सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदथ्ठं सर्वम्॥१३॥

देह. अयमात्मा सर्वेषां भूतानां मध्वस्याऽऽत्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजो-

यह मनुष्यादि जाति सभी भूतों का मधु है और समस्त भूत इस मनुष्यादि जाति के मधु हैं। यह जो मनुष्य जाति में तेजोमय अमरणधर्मा पुरुष है और यह अध्यात्म मनुष्यादि सम्बन्धी तेजोमय अमृतमय पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस श्रुतिवाक्य से कहा गया है) यह अमृत है, यह ब्रह्म है और यही सर्वरूप है॥१३॥

यह देह समस्त भूतों का कार्य होने से मधु है और समस्त भूत इस देह के मधु हैं। यह जो इस देह में तेजोमय अमरणधर्मा पुरुष है एवं जो यह आत्मा तेजोमय अमृतमय

---

धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकरणसंघातविशेषः। स येन जातिविशेषेण संयुक्तो भवति, स जातिविशेषो मानुषादिः। तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते। अतो मानुषादिजातिरपि **सर्वेषां भूतानां मधु**। तत्र मानुषादिजातिरपि बाह्याऽऽध्यात्मिकी चेत्युभयथा निर्देशभाग्भवति॥१३॥

यस्तु कार्यकरणसंघातो मानुषादिजातिविशिष्टः, सोऽयमात्मा **सर्वेषां भूतानां मधु**। नन्वयं शारीरशब्देन निर्दिष्टः पृथिवीपर्याय एव। न। पार्थिवांशस्यैव

मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेद-
ममृतमिदं ब्रह्मेदꣳ सर्वम्॥१४॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः
सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च
रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्ना-
त्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः
सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः॥१५॥

पुरुष है; यही वह है। जो कि "यह आत्मा है" (इस प्रतिज्ञावाक्य से कहा गया है) यह अविनाशी है, यह ब्रह्म है और यही सर्वरूप है॥१४॥

वह यह विज्ञानमय आत्मा सम्पूर्ण भूतों का अधिपति एवं सम्पूर्ण भूतों का राजा है। इसमें दृष्टान्त यह है— जैसे रथ की नाभि और रथ की नेमि में सभी अरे लगे रहते हैं, ऐसे ही इस सर्वात्मा में सभी भूत, सभी देव, सभी लोक, सभी प्राण और ये अविद्याकल्पित सभी जीवात्मा समर्पित हैं॥१५॥

---

तत्र ग्रहणात्। इह तु सर्वात्मा प्रत्यस्तमिताध्यात्माधिभूतादिसर्वविशेषः सर्वभूतदेवतागणविशिष्टः कार्यकरणसंघातः सोऽयमात्मेत्युच्यते। तस्मिन्नस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषोऽमूर्तरसः सर्वात्मको निर्दिश्यते। एकदेशेन तु पृथिव्यादिषु निर्दिष्टोऽत्राध्यात्मविशेषाभावात्स न निर्दिश्यते। यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसंघात आत्मा, स **यश्चायमात्मे**त्युच्यते॥१४॥

यस्मिन्नात्मनि परिशिष्टो विज्ञानमयोऽन्त्ये पर्याये प्रवेशितः, सोऽयमात्मा। तस्मिन्नविद्याकृतकार्यकरणसंघातोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते स एवमुक्तोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनभूतः **स वै स एवायमात्मा**ऽव्यवहितपूर्वपर्याये तेजोमय इत्यादिना निर्दिष्टो विज्ञानात्मा विद्वान् सर्वेषां भूतानामयमात्मा

सर्वैरुपास्यः **सर्वेषां भूतानामधिपतिः** सर्वभूतानां स्वतन्त्रो न कुमारामात्यवत्किं तर्हि **सर्वेषां भूतानां राजा**। राजत्वविशेषणमधिपतिरिति, भवति कश्चिद्राजोचितवृत्तिमाश्रित्य राजा न त्वधिपतिरतो विशिनष्ट्यधिपतिरिति। एवं सर्वभूतात्मा विद्वान्ब्रह्मविन्मुक्तो भवति। यदुक्तं "ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्" इतीदं तद्व्याख्यातम्। एवमात्मानमेव सर्वात्मत्वेनाऽऽचार्यागमाभ्यां श्रुत्वा, मत्वा तर्कतो, विज्ञाय साक्षादेवं, यथा मधुब्राह्मणे दर्शितं, तथा। तस्माद्ब्रह्मविज्ञानादेवंलक्षणात्पूर्वमपि ब्रह्मैव सदविद्ययाऽब्रह्माऽऽसीत्सर्वमेव च सदसर्वमासीत्तां त्वविद्यामस्माद्विज्ञानात्तिरस्कृत्य ब्रह्मविद्ब्रह्मैव सन्ब्रह्माभवत्सर्वः सन् सर्वमभवत्।

परिसमाप्तः शास्त्रार्थो यदर्थः प्रस्तुतः। तस्मिन्नेतस्मिन्सर्वात्मभूते ब्रह्मविदि सर्वात्मनि सर्वं जगत्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते— **तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता** इति प्रसिद्धोऽर्थः। **एवमेवास्मिन्नात्मनि** परमात्मभूते ब्रह्मविदि **सर्वाणि भूतानि** ब्रह्मादिस्तम्बपर्यन्तानि **सर्वे देवा** अग्न्यादयः **सर्वे लोका** भूरादयः **सर्वे प्राणा** वागादयः **सर्वे एत आत्मानो** जलचन्द्रवत्प्रतिशरीरानुप्रवेशिनोऽविद्याकल्पिताः। सर्वं जगदस्मिन्समर्पितम्। यदुक्तं ब्रह्मविद्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति। स एष सर्वात्मभावो व्याख्यातः। स एष विद्वान्ब्रह्मवित्सर्वोपाधिः सर्वात्मा सर्वो भवति। निरुपाधिर्निरुपाख्योऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनोऽजोऽजरोऽमृतोऽभयोऽचलो नेति नेत्यस्थूलोऽनणुरित्येवंविशेषणो भवति।

तमेतमर्थमजानन्तस्तार्किकाः केचित्पण्डितंमन्याश्चाऽऽगमविदः शास्त्रार्थं विरुद्धं मन्यमाना विकल्पयन्तो मोहमगाधमुपयान्ति। तमेतमर्थमेतौ मन्त्रावनुवदतः— "अनेजदेकं मनसो जवीयः" "तदेजति तन्नैजति" इति। तथा च तैत्तिरीयके— "यस्मात्परं नापरमस्ति किंचित्"। "एतत्साम गायन्नास्ते"। "अहमन्नमहमन्नमहमन्नम्" इत्यादि। तथा च च्छान्दोग्ये "जक्षत्क्रीडन्रममाणः"। "स यदि पितृलोक-

कामः"। "सर्वगन्धः सर्वरसः" "सर्वज्ञः सर्ववित्" इत्यादि। आथर्वणे च "दूरात्सुदूरे तदिहान्तिके च"। कठवल्लीष्वपि "अणोरणीयान्महतो महीयान्" "कस्तं मदामदं देवम्" "तद्धावतोऽन्यानत्येति तिष्ठत्" इति च। तथा गीतासु "अहं क्रतुरहं यज्ञः" "पिताऽहमस्य जगतः" "नाऽऽदत्ते कस्यचित्पापम्" "समं सर्वेषु भूतेषु" "अविभक्तं विभक्तेषु" "ग्रसिष्णु प्रभविष्णु च" इत्येवमाद्यागमार्थं विरुद्धमिव प्रतिभान्तं मन्यमानाः स्वचित्तसामर्थ्यादर्थनिर्णयाय विकल्पयन्तोऽस्त्यात्मा नास्त्यात्मा कर्ताऽकर्ता मुक्तो बद्धः क्षणिको विज्ञानमात्रं शून्यं चेत्येवं विकल्पयन्तो न पारमधिगच्छन्त्यविद्याया, विरुद्धधर्मदर्शित्वात्सर्वत्र। तस्मात्तत्र य एव श्रुत्याचार्य-दर्शितमार्गानुसारिणस्ते एवाविद्यायाः पारमधिगच्छन्ति। त एव चास्मान्मोह-समुद्रादगाधादुत्तरिष्यन्ति, नेतरे स्वबुद्धिकौशलानुसारिणः ॥१५॥

परिसमाप्ता ब्रह्मविद्याऽमृतत्वसाधनभूता। यां मैत्रेयी पृष्टवती भर्तारं "यदेव भगवानमृतत्वसाधनं वेद तदेव मे ब्रूहि" इति। एतस्या ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्या-यिकाऽऽनीता। तस्या आख्यायिकायाः संक्षेपतोऽर्थप्रकाशनार्थावेतौ मन्त्रौ भवतः। एवं हि मन्त्रब्राह्मणाभ्यां स्तुतत्वादमृतत्वसर्वप्राप्तिसाधनत्वं ब्रह्मविद्यायाः प्रकटीकृतं राजमार्गमुपनीतं भवति। यथाऽऽदित्य उद्यञ्शार्वरं तमोऽपनयतीति तद्वत्। अपि चैवं स्तुता ब्रह्मविद्या येन्द्रराजरक्षिता, सा दुष्प्रापा देवैरपि। यस्मादश्विभ्यामपि देव-भिषग्भ्यामिन्द्ररक्षिता विद्या महताऽऽयासेन प्राप्ता। ब्राह्मणस्य शिरश्छित्त्वाऽश्व्यं शिरः प्रतिसंधाय तस्मिन्निन्द्रेण च्छिन्ने पुनः स्वशिर एव प्रतिसंधाय तेन ब्राह्मणस्य स्वशिरसैवोक्ताऽशेषा ब्रह्मविद्या श्रुता। तस्मात्ततः परतरं किंचित्पुरुषार्थसाधनं न भूतं न भावि वा, कुत एव वर्तमानमिति नातः परा स्तुतिरस्ति।

अपि चैवं स्तूयते ब्रह्मविद्या। सर्वपुरुषार्थानां कर्म हि साधनमिति लोके प्रसिद्धम्। तच्च कर्म वित्तसाध्यं तेनाऽऽशाऽपि नास्त्यमृतत्वस्य। तदिदममृतत्वं केवलयाऽऽत्मविद्यया कर्मनिरपेक्षया प्राप्यते। यस्मात्कर्मप्रकरणे वक्तुं प्राप्ताऽपि

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। तद्वां नरा सनये दंसः उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्। दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति॥१६॥**

उस इस मधुविज्ञान को दध्यङ्ङाथर्वण ऋषि ने अश्विनीकुमारों को बतलाया था। इसी मधु को देखते हुए मन्त्र ने कहा था— मेघ जिस प्रकार वृष्टि करता है, नराकृति अश्विनीकुमारो! वैसे ही ब्रह्मविद्या की प्राप्तिरूप लाभ के लिये किये हुए तुम दोनों का यह उग्रदंस कर्म मैं प्रकट कर देता हूँ। जिस मधुविज्ञान को दध्यङ्ङाथर्वण ऋषि ने तुम अश्विनीकुमारों के प्रति घोड़े के शिर से प्रतिपादन किया था (मेघगर्जन के समान मन्त्र ने अश्विनीकुमारों के इस दुर्धर्ष कर्म की घोषणा कर दी है, जो वैदिक इतिहास में प्रसिद्ध है)॥१६॥

---

सती प्रवर्ग्यप्रकरणे कर्मप्रकरणादुत्तीर्य कर्मणा विरुद्धत्वात्केवलसंन्याससहिताऽभिहिताऽमृतत्वसाधनाय। तस्मान्नातः परं पुरुषार्थसाधनमस्ति। अपि चैवं स्तुता ब्रह्मविद्या। सर्वो हि लोको द्वन्द्वारामः। "स वै नैव रेमे तस्मादेकाकी न रमते" इति श्रुतेः। याज्ञवल्क्यो लोकसाधारणोऽपि सन्नात्मज्ञानबलाद्भार्यापुत्रवित्तादिसंसाररतिं परित्यज्य प्रज्ञानतृप्त आत्मरतिर्बभूव। अपि चैवं स्तुता ब्रह्मविद्या। यस्माद्याज्ञवल्क्येन संसारमार्गाद्व्युत्तिष्ठताऽपि प्रियायै भार्यायै प्रीत्यर्थमेवाभिहिता। "प्रियं भाषस एह्यास्स्व" इति लिङ्गात्।

तत्रेयं स्तुत्यर्थाऽऽख्यायिकेत्यवोचाम। का पुनः साऽऽख्यायिकेति। उच्यते— **इदमि**त्यनन्तरनिर्दिष्टं व्यपदिशति, बुद्धौ संनिहितत्वात्। **वै**शब्दः स्मारणार्थः। **तदि**त्याख्यायिकानिर्वृत्तं प्रकरणान्तराभिहितं परोक्षं वैशब्देन स्मारयन्निह व्यपदिशति। यत्तत्प्रवर्ग्यप्रकरणे सूचितं नाऽऽविष्कृतं मधु तदिदं मध्विहानन्तरं निर्दिष्टमियं

पृथिवीत्यादिना। कथं तत्र प्रकरणान्तरे सूचितं **दध्यङ् ह वा आभ्यामाथर्वणो मधु** नाम ब्राह्मणमुवाच।

तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति। स होवाचेन्द्रेण वा उक्तोऽस्म्येतच्चेदन्यस्या अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति। तस्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यात्तद्वामुपनेष्य इति। तौ होचतुरावां त्वा तस्मात्त्रास्यावहे इति। कथं मा त्रास्येथे इति। यदा नावुपनेष्यसे। अथ ते शिरश्छित्त्वाऽन्यत्राऽऽहृत्योपनिधास्यावः। अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः। तेन नावनुवक्ष्यसि। स यदा नावनुवक्ष्यसि। अथ ते तदिन्द्रः शिरश्छेत्स्यति। अथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति। तथेति तौ होपनिन्ये। तौ यदोपनिन्ये। अथास्य शिरश्छित्त्वाऽन्यत्रोपनिदधतुः। अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः। तेन हाऽऽभ्यामनूवाच। स यदाऽऽभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेद। अथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुरिति। यावत्तु प्रवर्ग्यकर्माङ्गभूतं मधु तावदेव तत्राभिहितं, न तु कक्ष्यमात्मज्ञानाख्यम्। तत्र याऽऽख्यायिकाऽभिहिता सेह स्तुत्यर्था प्रदर्शिता। इदं **वै तन्मधु दध्यङ्ङाथर्वणोऽ**नेन प्रपञ्चेना**श्विभ्यामुवाच**।

**तदेतदृषि**स्तदेतत्कर्म ऋषिर्मन्त्रस्तद्द्रष्टा वा **पश्यन्नु**पलभमानोऽवोचदुक्तवान्। कथम्? **तद्दंस** इति व्यवहितेन संबन्धः। **दंस** इति कर्मणो नामधेयम्। तच्च **दंसः** किंविशिष्टम्? **उग्रं** क्रूरम्। वां युवयोः। हे **नरा** नराकारावश्विनौ। तच्च कर्म किंनिमित्तम्? **सनये** लाभाय। लाभलुब्धो हि लोकेऽपि क्रूरं कर्माऽऽचरति, तथैवैतावुपलभ्येते यथा लोके। तदाविः प्रकाशं कृणोमि करोमि यद्रहसि भवद्भ्यां कृतम्। किमिवेत्युच्यते। **तन्यतुः** पर्जन्यो नेव। नकारस्तूपरिष्टादुपचार उपमार्थीयो वेदे, न प्रतिषेधार्थः। यथाऽश्वं न। अश्वमिवेति यद्वत्। **तन्यतुरिव वृष्टिं** यथा पर्जन्यो वृष्टिं प्रकाशयति स्तनयित्न्वादिशब्दैस्तद्वदहं युवयोः क्रूरं कर्माऽऽविष्कृणोमीति संबन्धः। नन्वश्विनोः स्तुत्यर्थौ कथमिमौ मन्त्रौ स्यातां, निन्दावचनौ हीमौ। नैष दोषः। स्तुतिरेवैषा न निन्दावचनौ। यस्मादीदृशमप्यतिक्रूरं कर्म

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। आथर्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतम्। स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति॥१७॥**

उस इस मधुविज्ञान को दध्यङ्ङाथर्वण ऋषि ने अश्विनीकुमारों से कहा था। इसे देखते हुए मन्त्रद्रष्टा ऋषि ने कहा— हे अश्विनीकुमारो! तुम दोनों ने दध्यङ्ङाथर्वण के लिए अश्व का शिर लाया और उस ऋषि ने सत्य का पालन करते हुए तुम्हें सूर्यसंबन्धी मधु का विज्ञान कराया एवं हे शत्रु-हिंसक! जो आत्मज्ञानसंबन्धी गोपनीय मधुविज्ञान था (वह भी तुम्हें ऋषि ने बतला दिया था)॥१७॥

---

कुर्वतोर्युवयोर्न लोम च हीयते इति। न चान्यत्किंचिद्धीयते एवेति स्तुतावेतौ भवतः। निन्दां प्रशंसां हि लौकिकाः स्मरन्ति। तथा प्रशंसारूपा च निन्दा लोके प्रसिद्धा। **दध्यङ्**नामाऽऽथर्वणः। **ह**ेत्यनर्थको निपातः। **यन्मधु** कक्ष्यमात्मज्ञानलक्षण**माथर्वणो वां** युवाभ्या**मश्वस्य शीर्ष्णा** शिरसा **प्र यदीमुवाच** यत्प्रोवाच मधु। **ईं**मित्यनर्थको निपातः॥१६॥

**इदं वै तन्मध्वि**त्यादि पूर्ववन्मन्त्रान्तरप्रदर्शनार्थम्। तथाऽन्यो मन्त्रस्तामेवाऽऽख्यायिकामनुसरति स्म। **आथर्वणो** दध्यङ्नामाऽऽ**थर्वणो**ऽन्यो विद्यत इत्यतो विशिनष्टि दध्यङ्नामाऽऽथर्वणस्तस्मै **दधीच आथर्वणाय** हेऽ**श्विनावि**ति मन्त्रदृशो वचनम्। अश्वमश्वस्य स्वभूतं शिरो ब्राह्मणस्य शिरसि च्छिन्नेऽश्वस्य शिरश्छित्त्वेदृशमतिक्रूरं कर्म कृत्वाऽ**श्व्यं शिरो** ब्राह्मणं **प्रत्यैरयतं** गमितवन्तौ युवाम्। **स** चाऽऽथर्वणो **वां** युवाभ्यां **तन्मधु प्रवोच**द्यत्पूर्वं प्रतिज्ञातं वक्ष्यामीति। स किमर्थमेवं जीवितसंदेहमारुह्य प्रोवोचदित्युच्यते। **ऋतायन्**यत्पूर्वं प्रति-

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति। स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम्॥१८॥**

उस इस मधुविज्ञान को दध्यङ्ङाथर्वण ने अश्विनीकुमारों से कहा था। इसे देखते हुए ऋषि से कहा है— परमात्मा ने दो पैरों वाले और चार पैरों वाले शरीर बनाये। पहले वह पुरुष पक्षी (लिङ्गशरीर) होकर स्थूल शरीरों में प्रविष्ट हो गया। इसलिये वह यह परमेश्वर सभी शरीरों में निवास करने के कारण पुरुष कहलाता है। संसार में ऐसा कुछ भी नहीं है जो उस पुरुष से आच्छादित न हो तथा ऐसा भी कुछ नहीं है जिसमें परमेश्वर का प्रवेश न हुआ हो, इससे परमात्मा की सर्वव्यापकता स्पष्ट हो जाती है॥१८॥

---

ज्ञातं सत्यं तत्परिपालयितुमिच्छन्। जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत्। किं तन्मधु प्रावोचदित्युच्यते। **त्वाष्ट्रं** त्वष्टाऽऽदित्यस्तस्य संबन्धि-यज्ञस्य शिरश्छिन्नं त्वष्टाऽभवत्तत्प्रतिसंधानार्थं प्रवर्ग्यं कर्म। तत्र प्रवर्ग्यकर्माङ्गभूतं यद्विज्ञानं तत्त्वाष्ट्रं मधु, यज्ञस्य शिरश्छेदनप्रतिसंधानादिविषयं दर्शनं तत्त्वाष्ट्रं यन्मधु। हे **दस्रौ** दस्राविति परबलानामुपक्षपयितारौ शत्रूणां वा हिंसितारौ। **अपि** च न केवलं त्वाष्ट्रमेव मधु कर्मसंबन्धि युवाभ्यामवोचदपि च **कक्ष्यं** गोप्यं रहस्यं परमात्मसंबन्धि यद्विज्ञानं मधु मधुब्राह्मणेनोक्तमध्यायद्वयप्रकाशितं तच्च **वां** युवाभ्यां **प्रवोचदित्य**नुवर्तते॥१७॥

इदं वै तन्मध्विति पूर्ववत्। उक्तौ द्वौ मन्त्रौ प्रवर्ग्यसंबन्ध्याख्यायिकोपसंहर्तारौ। द्वयोः प्रवर्ग्यकर्मार्थयोरध्याययोरर्थ आख्यायिकाभूताभ्यां मन्त्राभ्यां

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। रूपꣳ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति। अयं वै हरयोऽयं वै दश**

उस इस मधु को दध्यङ्ङाथर्वण ने अश्विनीकुमारों से कहा। यह देखते हुए मन्त्रद्रष्टा ऋषि ने कहा— वह परमात्मा रूप-रूप के प्रतिरूप हो गया। अपना वह रूप अभिव्यक्त करने के लिए वही परमेश्वर माया से अनेक रूप वाला दीखता है। शरीररूप रथ में इसके

---

प्रकाशितः। ब्रह्मविद्यार्थयोस्त्वध्याययोरर्थ उत्तराभ्यामृग्भ्यां प्रकाशयितव्य इत्यतः प्रवर्तते। यत्कक्ष्यं च मधूक्तवानाथर्वणो युवाभ्यामित्युक्तम्। किं पुनस्तन्मध्वित्युच्यते। **पुरश्चक्रे** पुरः पुराणि शरीराणि यत इयमव्याकृतव्याकरणप्रक्रिया, स परमेश्वरो नामरूपे अव्याकृते व्याकुर्वाणः प्रथमं भूरादींल्लोकान्सृष्ट्वा **चक्रे** कृतवान्**द्विपदो** द्विपादुपलक्षितानि मनुष्यशरीराणि पक्षिशरीराणि। तथा **पुरः** शरीराणि **चक्रे** **चतुष्पदश्च**तुष्पादुपलक्षितानि पशुशरीराणि। **पुरः** पुरस्तात्स ईश्वरः **पक्षी** लिङ्गशरीरं **भूत्वा पुरः** शरीराणि **पुरुषे आविशदि**त्यस्यार्थमाचष्टे श्रुतिः। **स वा अयं पुरुषः सर्वासु पूर्षु** सर्वशरीरेषु **पुरिशयः** पुरि शेते इति पुरिशयः सन्पुरुष इत्युच्यते। **नैनेना**नेन **किंचन** किंचिदप्य**नावृत**मनाच्छादितम्। तथा **नैनेन किञ्चनासंवृत**मन्तरननुप्रवेशितं बाह्यभूतेनान्तर्भूतेन च नानावृतम्। एवं स एव नामरूपात्मनाऽन्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थितः। पुरश्चक्रे इत्यादिमन्त्रः संक्षेपत आत्मैकत्वमाचष्टे इत्यर्थः॥१८॥

**इदं वै तन्मध्वि**त्यादि पूर्ववत्। **रूपं रूपं प्रतिरूपो बभूव**। रूपं रूपं प्रति **प्रतिरूपो** रूपान्तरं **बभूवे**त्यर्थः। प्रतिरूपोऽनुरूपो वा

## च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मा-पूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥

## इति बृहदारण्यकोपनिषदि द्वितीयाध्याये मधुनामपञ्चमं ब्राह्मणम् ॥५॥

इन्द्रियरूप घोड़े सौ और दश हैं। यह परमात्मा ही इन्द्रियरूप अश्व भी यही दश सहस्र, अनेक एवं अनन्त हैं। वह यह ब्रह्म कारणरहित, कार्यरहित, विजातीय द्रव्य संसर्गशून्य और अबाह्य हैं। यह आत्मा ही सबका अनुभव करने वाला परमात्मा है। बस यही सम्पूर्ण वेदान्तों का उपदेश है ॥१९॥

॥ इति पञ्चमं ब्राह्मणम् ॥

---

यादृक्संस्थानौ मातापितरौ तत्संस्थानस्तदनुरूप एव पुत्रो जायते। न हि चतुष्पदो द्विपाज्जायते द्विपदो वा चतुष्पात्। स एव हि परमेश्वरो नामरूपे व्याकुर्वाणो रूपं रूपं प्रतिरूपो बभूव। किमर्थं पुनः प्रतिरूपमागमनं तस्येत्युच्यते। **तदस्याऽऽत्मनो रूपं प्रतिचक्षणाय** प्रतिख्यापनाय। यदि हि नामरूपे न व्याक्रियेते, तदाऽस्याऽऽत्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत। यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते भवतस्तदाऽस्य रूपं प्रतिख्यायते। **इन्द्रः** परमेश्वरो **मायाभिः** प्रज्ञाभिर्नामरूपकृतमिथ्याभिमानैर्वा न तु परमार्थतः **पुरुरूपो** बहुरूप **ईयते** गम्यते एकरूप एव प्रज्ञानघनः सन्नविद्याप्रज्ञाभिः। कस्मात्पुनः कारणात्? **युक्ता** रथ इव वाजिनः स्वविषयप्रकाशनाय, **हि** यस्मादस्य **हरयो** हरणादिन्द्रियाणि **शता** शतानि **दश** च प्राणिभेदबाहुल्याच्छतानि दश च भवन्ति। तस्मादिन्द्रियविषयबाहुल्यात्तत्प्रकाशनायैव च युक्तानि तानि नाऽऽत्मप्रकाशनाय। "पराञ्चि खानि व्यतृणत्स्वयंभूः" इति हि काठके। तस्मात्तैरेव विषयस्वरूपैरीयते न प्रज्ञानघनैकरसेन स्वरूपेण।

(मधु वंश की सम्प्रदाय परंपरा)

।अथ द्वितीयाध्यायस्य मधुवंशनामषष्ठं ब्राह्मणम्।

**अथ वꣳशः।पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥१॥**

(४) अध्ययन अध्यापन.
वंश वर्णन से ५ लाभ : (१) विद्यास्तुति (२) ब्रह्मविद्या उत्पत्ति (३) प्रतिदिन पाठ से जाप से अपूर्व.

अब ( ब्रह्मविद्या की स्तुति के लिये मधुकाण्ड का ) वंश बतलाया जाता है। ( यह मन्त्र स्वाध्याय और जप के लिए है ) पौतिमाष्य ने गौपवन से, गौपवन ने पौतिमाष्य से, पौतिमाष्य ने गौपवन से, गौपवन ने कौशिक से, कौशिक ने कौण्डिन्य से, कौण्डिन्य ने शाण्डिल्य से, शाण्डिल्य ने कौशिक से और गौतम से, गौतम ने॥१॥

---

एवं तर्ह्ययमन्यः परमेश्वरोऽन्ये हरय इत्येवं प्राप्ते उच्यते— **अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च**। प्राणिभेदस्याऽऽनन्त्यात्। किं बहुना तदेतद्ब्रह्म य आत्माऽपूर्वं नास्य कारणं पूर्वं विद्यत इत्यपूर्वम्। नास्यापरं कार्यं विद्यत इत्य**नपरम्**। नास्य जात्यन्तरमन्तराले विद्यत इत्य**नन्तरम्**। तथा बहिरस्य न विद्यते इत्य**बाह्यम्**। किं पुनस्तन्निरन्तरं **ब्रह्मायमात्मा**। कोऽसौ? यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता बोद्धा विज्ञाता **सर्वानुभूः** सर्वात्मना सर्वमनुभवतीति सर्वानुभूरि**त्येतदनुशासनं** सर्ववेदान्तोपदेशः। एष सर्ववेदान्तानामुपसंहृतोऽर्थः। एतदमृतमभयम्। परिसमाप्तश्च शास्त्रार्थः॥१९॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य मधुनामपञ्चमं ब्राह्मणम्॥५॥

**अथेदानीं** ब्रह्मविद्यार्थस्य मधुकाण्डस्य **वंशः** स्तुत्यर्थो ब्रह्मविद्यायाः। मन्त्रश्चायं स्वाध्यायार्थो जपार्थश्च। तत्र वंश इव वंशो यथा वेणुर्वंशः पर्वणः पर्वणो

आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳ सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिः ॥२॥

घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चाऽऽसुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजशाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्आत्रेयादात्रेयो माण्टेर्माण्टिगौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽ-

आग्निवेश्य से, आग्निवेश्य ने शाण्डिल्य और आनभिम्लात से, आनभिम्लात ने आनभिम्लात से, आनभिम्लात ने गौतम से, गौतम ने सैतव और प्राचीनयोग्य से, सैतव और प्राचीनयोग्य ने पाराशर्य से, पाराशर्य ने भारद्वाज से, भारद्वाज ने भारद्वाज और गौतम से, गौतम ने भारद्वाज से, भारद्वाज ने पाराशर्य से, पाराशर्य ने बैजवापायन से, बैजवापायन ने कौशिकायनि से, कौशिकायनि ने॥२॥

घृतकौशिक से, घृतकौशिक ने पाराशर्यायण से, पाराशर्यायण ने पाराशर्य से, पाराशर्य ने जातूकर्ण्य से, जातूकर्ण्य ने आसुरायण और यास्क से, आसुरायण ने त्रैवणि से त्रैवणि ने औपजंधनि से, औपजंधनि ने आसुरि से, आसुरि ने भारद्वाज से, भारद्वाज ने आत्रेय से, आत्रेय ने माण्टि से, माण्टि ने गौतम से, गौतम ने गौतम से, गौतम ने वात्स्य से, वात्स्य

---

हि भिद्यते, तद्वदग्रात्प्रभृत्या मूलप्राप्तेरयं वंशः। अध्यायचतुष्टयस्याऽऽचार्यपरम्पराक्रमो

**थर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वश्ंसनान्मृत्युः प्राध्वश्ंसनः प्रध्वश्ंसनात्प्रध्वश्ंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः नातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥३ ॥**

**इति बृहदारण्यकोपनिषदि द्वितीयाध्याये मधुवंशनामषष्ठं ब्राह्मणम् ॥६ ॥**

**इति बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः ॥२ ॥**

**बृहदारण्यकक्रमेण चतुर्थोऽध्यायः ॥४ ॥**

ने शाण्डिल्य से, शाण्डिल्य ने कैशोर्यकाप्य से, कैशोर्यकाप्य ने कुमारहारित से, कुमारहारित ने गालव से, गालव ने विदर्भीकौण्डिन्य से, विदर्भीकौण्डिन्य ने वत्सनपात् बाभ्रव से, वत्सनपात् बाभ्रव ने पन्था सौभर से, पन्था सौभर ने अयास्य आङ्गिरस से, अयास्य आङ्गिरस ने आभूतित्वाष्ट्र से, आभूतित्वाष्ट्र ने विश्वरूपत्वाष्ट्र से, विश्वरूपत्वाष्ट्र ने अश्विनीकुमारों से, अश्विनीकुमारो ने दध्यङ्ङाथर्वण से, दध्यङ्ङाथर्वण ने अथर्वादैव से, अथर्वादैव ने मृत्युप्राध्वंसन से, मृत्युप्राध्वंसन ने प्रध्वंसन से, प्रध्वंसन ने एकर्षि से, एकर्षि ने विप्रचित्ति से, विप्रचित्ति ने व्यष्टि से, व्यष्टि ने सनारु से, सनारु ने सनातन से, सनातन ने सनक से, सनक ने विराट् से और विराट ने हिरण्यगर्भ से इस विद्या को प्राप्त किया। ब्रह्मा स्वयंभु है, उस ब्रह्मा को नमस्कार है ॥३॥

॥ इति षष्ठोऽध्यायः ॥

श्रीमत्परमहंस परिव्राजकाचार्य श्रोत्रिय ब्रह्मनिष्ठ पदवाक्यप्रमाणपारावारीण श्रीकैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर अनन्त श्री स्वामी विद्यानन्द गिरि जी महाराज वेदान्त-सर्वदर्शनाचार्य रचित बृहदारण्यकोपनिषद्-मधुकाण्ड की ''विद्यानन्दी मिताक्षरा'' टीका पूर्ण हुई।

---

वंश इत्युच्यते। तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यः। **परमेष्ठी** विराट्। ब्रह्मणो हिरण्यगर्भात्। ततः परमाचार्यपरम्परा नास्ति। यत्पुनर्ब्रह्म तन्नित्यं स्वयंभु। **तस्मै ब्रह्मणे स्वयंभुवे नमः**॥ १ ॥ २ ॥ ३ ॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य
मधुवंशनामषष्ठं ब्राह्मणम् ॥६ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीमच्छङ्करभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये
द्वितीयोऽध्यायः ॥२ ॥
मधुकाण्डं समाप्तम्।
इत्येकादशाह्निकम् ॥११ ॥

# गुरुजन-शताब्दी-त्रिवेणी-सङ्गम-प्रसङ्गे प्रकाशितम्

ऋषिकेशस्थ श्री कैलास आश्रम की दिव्य विभूतियाँ

जगद्गुरु भगवान आद्य शंकराचार्य जी

## श्रीकैलासपीठाधीश्वर परमादर्श आ. म. मं.

# श्रीमत्स्वामी विद्यानन्द गिरि जी महाराज



आप का जन्म 29 नवम्बर, सन् 1921 को जिला पटना (बिहार) के गाजी पुर ग्राम में हुआ। आपके पिता श्रीमान् जवाहर शर्मा जी और माता श्रीमती ललिता देवी थीं। आप बाल्यकाल से ही भगवान् की उपासना में रुचि रखते थे। 20 वर्ष की आयु में आपने घर गृहस्थी को त्याग कर साधु जीवन अपनाया। आपके गुरुदेव परमहंस स्वामी विज्ञानानन्द गिरि जी महाराज एवं परमगुरुदेव योगीराज स्वामी नित्यानन्द गिरि जी महाराज से आपने परमार्थ पथ की दीक्षा ली। अपनी सारस्वत साधना में आपने काशी में वेदान्त-सर्वदर्शनाचार्य तक अध्ययन कर परीक्षा पास की। तत्पश्चात् आप अध्यापन कार्य में संलग्न हुए। दस वर्षों तक दिल्लीस्थ विश्वनाथ संस्कृत महाविद्यालय के प्रधानाचार्य रहे। वहीं पर निरंजनपीठाधीश्वर आचार्य म.मं. स्वामी नृसिंह गिरि जी महाराज एवं निरंजनपीठाधीश्वर आचार्य म.मं. स्वामी महेशानन्द गिरि जी महाराज की छत्रछाया में संन्यास दीक्षा ली।

21 जुलाई सन् 1969 को आप कैलास ब्रह्मविद्यापीठ ऋषिकेश के महामण्डलेश्वर पद पर आसीन हुये। आपके कार्यकलापों से तब विद्यमान कैलास आश्रम के दो पूर्वाचार्य म.मं. स्वामी विष्णुदेवानन्द गिरि जी महाराज एवं म.मं. स्वामी चैतन्य गिरि जी महाराज अत्यन्त संतुष्ट हुये। आपनेग्रन्थ रचना एवं प्रकाशन में विशेष रुचि ली और अनेकों ग्रन्थों का लोककल्याणार्थ प्रकाशन बड़े धैर्यपूर्वक करवाया। आपने कैलास आश्रम की शताब्दी (1980-81), आचार्यद्वय जन्म शताब्दी (1985-86), आद्यश्री शङ्कराचार्य द्वादश शताब्दी (1987-88), भगवान् अभिनवचन्द्रेश्वर प्रतिष्ठा शताब्दी (1992-97) आदि महत्वपूर्ण महोत्सव बड़ी धूमधाम से मनाकर गुरुजनों के यश को चार चाँद लगाये। आप भारत के आध्यात्मिक एवं धार्मिक क्षेत्र के आचार्यों में अग्रगण्य हैं। साधु समाज की दृष्टि में आप की क्षमता, शक्ति, लगन, तत्परता, विद्वत्ता तपश्चर्या सहिष्णुता एवं उदारता सभी गगन-चुम्बी और अलौकिक हैं। आध्यात्मिक संस्कृति के सर्वाङ्गीन विकास और जन जीवन को दिव्यालोक प्रदान करने में आपने युगपुरुष की भूमिका निभाई है।

आपने शाङ्करी परम्परा को पुष्ट करने का स्तुत्य सफल प्रयास किया है। शाङ्करभाष्य नित्य पारायण के आप प्रणेता हैं और तदनुरूप ग्रन्थों के पारायण संस्करणों को आप प्रकाशित करवा रहे हैं। आपकी इन सभी प्रवृत्तियों को देखकर सन्तों एवं भक्तों ने आपको **शाङ्करी -परम्परा-संपोषकाचार्य** उपाधि से समलंकृत किया है। गुरुजनों के प्रति आपके मन में अगाध श्रद्धा एवं भक्ति है। **गुरुजन शताब्दी त्रिवेणी संगम** महोत्सव के आप ही परिकल्पक एवं संयोजक हैं।